वैश्यश्चेन्मन्त्रं ग्राहयित्वा तदुत्तरं तदक्षरं तदुत्तरं तदक्षरमिति निर्देशेनोपदिशेद्दक्षिणे कर्णे ॥ १७ ॥

शूद्रश्चेन्मन्त्रं लिखित्वाञ्जलिपुटे दद्यात् ॥ १८ ॥

ब्राह्मणक्षत्रवैश्येषु मन्त्रं श्रौतं पौराणं वा ॥ १९ ॥

शूद्रानुलोमजेषु पौराणमेव ॥ २० ॥

त्रयाणां वर्णानां यत्रकुत्राश्रमिणां ब्राह्मणो यत्रकुत्राश्रमी गुरुः ॥ २१ ॥

ब्राह्मणो ब्राह्मणादुत्तराश्रमस्थान्मन्त्रं गृह्णीयात् ॥ २२ ॥

समानाश्रमस्थाद्वा ॥ २३ ॥

गुरोः पादयोर्दण्डवत्पतित्वा ॥ २४ ॥

**धन्योऽस्मि कृतकृत्योऽस्मि पारानन्दमतेऽमुकाचारेऽमुकेश्वरेऽमुके मन्त्रे यद्दीक्षितस्त्वत्त** इति ॥ २५ ॥

ततो गुरुरीपत्प्रहस्योत्थाप्य पारानन्दं मतं मतधर्मांश्चोपदिशेत् ॥ २६ ॥

**आचार्यशब्दान्तं नाम** शिष्ये विदध्यादाद्ये ॥ २७ ॥

स्वनाम कथयेच्च ॥ २८ ॥

स्वस्मिन्गुरुस्थापितविदितनामा संस्कारदाताभिवादनक्रमेणाभिवाद्य पारानन्दमताभिवादनक्रमेणाभिवादयेत् ॥ २९ ॥

ततो गुरुः **श्रुतिस्मृतिपुराणोक्तान् पारानन्दाविरुद्धान्धर्मान्दक्षिणः पारानन्दः कुर्या**दित्युपदिशेत् ॥ ३० ॥

**एष पुरुषश्चतुर्भिरनुज्ञाप्यो भवति** ॥ ३१ ॥

मातृपितृगुरुदैवतैरिति ॥ ३२ ॥

उत्पत्तितः प्रागुपनयना**न्मातृप्रेष्यो** भवति ॥ ३३ ॥

उपनयनतः प्राङ्मन्त्रदीक्षायाः **पित्राज्ञाप्यो** भवति ॥ ३४ ॥

मन्त्रदीक्षातः प्राग्देवतासाक्षात्कारा**द्गुर्वनुज्ञाप्यो** भवति ॥ ३५ ॥

देवतासाक्षात्कारतो **देवतानुज्ञाप्यः** प्राक्परामुक्तेर्भवति ॥ ३६ ॥

तस्माद्गुर्वनुज्ञातो विहरेत् ॥ ३७ ॥

सर्वेभ्यः परो गुरुर्गुरोः परो मन्त्रो मन्त्रात्परा देवता देवतायाः परः परमात्मेति भावयेत् ॥ ३८ ॥

मन्त्रार्थं **गुरुराश्रितो** देवतार्थं **मन्त्र आश्रित** इति भावयेत् ॥ ३९ ॥

गुरोः प्रकाशो देवतायाश्च प्रकाशः कार्यः ॥ ४० ॥

ततो मन्त्रः कण्ठकूपादूर्ध्वमानीतः सिद्धिं कुर्यात् ॥ ४१ ॥

ओष्ठपुटाद्बहिर्निष्कासित सिद्धि हन्यात् ॥ ४२ ॥

**खेष्टेश्वरः खेष्टमन्त्रः** ॥ ४३ ॥

तस्मात्सर्वथा गोप्य ॥ ४४ ॥

शिष्यादन्यत्र ॥ ४५ ॥

शासितु योग्य, **शिष्यः** ॥ ४६ ॥

सर्वाणि शास्त्राणि दृष्ट्वा स्वशास्त्रे शिष्यते यस्य मति स **शिष्यः** ॥ ४७ ॥

शिष्टेभ्य स्वाचारेण मुद प्रकर्षेण यच्छति स **शिष्यः** ॥ ४८ ॥

पुण्यपापयो शैथिल्य याति स **शिष्यः** ॥ ४९ ॥

शैघ्र्येणेश्वर धर्मं यतति स **शिष्यः** ॥ ५० ॥

गुरो प्रकाशन मन्त्रेश्वरयोर्गोपन**मिच्छन्ति** ॥ ५१ ॥

मन्त्रगुर्वोर्गोपन **केचित्** ॥ ५२ ॥

**गुरुमन्त्रेश्वराणां गोपनमिच्छामः** ॥ ५३ ॥

मन्त्रगोपन **सर्वे**ऽनुमन्यन्ते ॥ ५४ ॥

श्रीगुरोराचार्यस्य पादपद्म यस्या दिशि विराजते तस्यै दिशे नमस्कुर्यात्प्रतिदिन त्रिसध्यम् ॥ ५५ ॥

स यदि प्रेत स्याचेदुत्तरस्या दिशि त विभाव्य नमस्कुर्यात् ॥ ५६ ॥

स स्वच्छन्द यदि गत स्याद्वा ॥ ५७ ॥

ध्यानमूल गुरुर्मन्त्रमूल गुरुर्मतमूल गुरुराचारमूल गुरुस्तस्मात्सर्वथा सिध्यर्थं भक्ति-सयुतै **शिष्यैर्गुरुः सेव्यः** ॥ ५८ ॥

भोगस्वर्गापवर्गकाङ्क्षिणा भक्तिरेवैक पन्था **नान्यः पन्था** इति **श्रुतिः** ॥५९॥

सस्काराचारे दक्षाचारे वामाचारे उत्तराचारे गुरुरेव परायण गुरुर्मार्गप्रदर्शकस्त-स्मात्सर्वथा मान्य पूज्य तोष्यः ॥ ६० ॥

महापातकानि दहति पुण्यानि विवर्धयति इति ईश्वर नेत्रमार्गमानयति **तस्मै विश्वासाय नमः** ॥ ६१ ॥

विष्णुशिवादय ईश्वरा इन्द्रादयो देवा मुनयो योगिनस्तुष्टा भवन्ति गुरौ तुष्टे ॥६२॥

कुर्वन्त्वस्मिँश्चानुग्रहम् ॥ ६३ ॥

मथित्वा ज्ञानमन्थेन वेदागममहार्णवम् ॥

पारानन्द(गुरु)मत शुद्ध रसज्ञेन मयोद्धृतमिति ॥ ६४ ॥

विहाय सर्वान् धर्मान्नानागुरुमतानि च ॥

पारान दान्धर्मान्पारानन्द मत पारानन्दगुरोर्मुखाच्छ्रुत्वानुष्ठेय चानुसधेयम् ॥ ६५ ॥

शैवः शिवं पितृवत्परिचरेद्विष्ण्वादीनीश्वराँश्चतुरः पितृव्यवधमादीन्बन्धुवत्तद्भक्तान्पितृव्यपुत्रवत्तान्यथायोग्यं परिचरेत् ॥ ८६ ॥

एवं परस्परम् ॥ ८७ ॥

होमादिपूत्तरक्रत्वन्तेषु यथार्थं यज्ञेषु ॥ ८८ ॥

यावन्तः पशवस्तावन्तः प्रतिकृतयः ॥ ८९ ॥

स्वेश्वरचिह्नोपर्यन्यचिह्नं न धार्यम् ॥ ९० ॥

ऋते पूजावशिष्टात् ॥ ९१ ॥

तत्प्रोंछ्य वा ॥ ९२ ॥

स्वेष्टार्चाशिष्टोपर्यन्यार्चाशिष्टं न धार्यम् ॥ ९३ ॥

ईशानां परस्परं ग्रस्तहृदयत्वात्तत्प्रोंछ्य धार्यमित्येके ॥ ९४ ॥

नान्येशचिह्नं धारयेत् ॥ ९५ ॥

नान्येशोपवासमुपवसेत् ॥ ९६ ॥

परस्परं ग्रस्तहृदयत्वादुपवसेदेके ॥ ९७ ॥

नान्येशमर्चयेत् ॥ ९८ ॥

अर्चयेदेके ॥ ९९ ॥

अर्नीहः समर्चयेत् ॥ २०० ॥

**अन्येशानभ्यर्च्य स्वोपास्ये भक्तिमीहेत्तेभ्यः** ॥ १ ॥

**स्वोपास्यादर्शनम्** ॥ २ ॥

स्वोपास्यदर्शनं **जीवन्मुक्तिः** ॥ ३ ॥

जीवन्मुक्तो न कर्मभिर्लिप्यते पुण्यैः पापैर्वा ॥ ४ ॥

**न स पुनरावर्तते । न स भूयः संसारं संपद्यते** ॥ ५ ॥

तस्मात्तद्दर्शने यतितव्यम् ॥ ६ ॥

ज्ञानी भक्तो भवेत् ॥ ७ ॥

*आर्तजिज्ञास्वर्थार्थिज्ञानिन उदारास्तत्रेशस्य ज्ञानी भक्त एव परमात्मलोकमाप्नोति* **ब्रह्मविदाप्नोति पर**मिति **शब्दात्** ॥ ८ ॥

नित्यानि विहितानि कर्माणि तदनुकुर्यात् ॥ ९ ॥

तस्मै समर्पयेत् ॥ १० ॥

ध्यानयोगेन भक्तियोगेन कर्मयोगेन ज्ञानयोगेन स्वनेत्रमार्गमानयेत्तम् ॥ ११ ॥

**अथ विशेषतः** ॥ १२ ॥

ब्रह्मचारी ज्ञानयोगेन श्रुतितन्त्रस्मृतिपुराणानाम् ॥ १३ ॥

गृही कर्मयोगेन ॥ १४ ॥

वन्यो भक्तियोगेन ॥ १५ ॥
त्यागी ध्यानयोगेन ॥ १६ ॥
सर्वे योगाश्चतुर्विधाः ॥ १७ ॥
भक्तियोगः सर्वेभ्यो गरीयान् ॥ १८ ॥
अचिन्त्यं तत्सामर्थ्यम् ॥ १९ ॥
तस्य कोन्वधिकारीत्यत्र मुनयोऽपि मोहं जग्मुः ॥ २० ॥
स्वप्राणत्यागं विहितं कुर्वन्ति ॥ २१ ॥
कृते महानभ्युदयः ॥ २२ ॥

## इति परानन्दसूत्रे तृतीयमाह्निकम् ॥ ३ ॥

ॐ **विघ्नेशस्य** त्रिभिराचारैश्चतुर्भिराश्रमैर्वर्णैश्च सेव्यत्वम् ॥ २३ ॥
एवमेव त्रयाणाम् ॥ २४ ॥
द्वितीयाचारसेव्यत्वं नास्तीत्येके ॥ २५ ॥
**कौशिक्याख्यस्य** रूपस्याद्याचाराद्याश्रमसेव्यत्वम् ॥ २६ ॥
समावृत्तो न सेवेत कौशिक्याख्यं रूपम् ॥ २७ ॥
वीर्यधारणसामर्थ्याद्विजः सेवितुमर्हति ॥ २८ ॥
ऋते सम्प्रयोगाभ्यां वीर्यं स्खलन्पतितो भवेत् ॥ २९ ॥
स्त्रीणां कामाविर्भावकरं रूपं न पश्येत् ॥ ३० ॥
कामाविर्भावकरं सुवस्त्रं सुगृहं सुगन्धं सुगानं यद्यत्तत्त्यजेत् ॥ ३१ ॥
कामाविर्भावकरं देवालयगमनमपि त्यजेत् ॥ ३२ ॥
योऽहिभ्य इव स्त्रीभ्यो बिभेति स्त्रैणेभ्यश्च स एवोपास्ते ॥ ३३ ॥
तस्मादूर्ध्वरेतसा ब्रह्मचारिणा मेखलायुतेनैषा महाविद्या सेव्याऽऽमरणाद्देवतासाक्षात्कारतः ॥ ३४ ॥
कौशिकीदीक्षितो न समावृत्तो भवेत् ॥ ३५ ॥
**पतितः** काल्यादिरूपदीक्षितः समावृत्तो भवेत् ॥ ३६ ॥
**विवाहिता** न सेवेत कौशिक्याख्यं रूपम् ॥ ३७ ॥
वीर्यधारणसामर्थ्याद्विजजा सेवितुमर्हति ॥ ३८ ॥
ऋते सम्प्रयोगाभ्यां वीर्यं स्खलन्पतिता भवेत् ॥ ३९ ॥
पुंसां कामाविर्भावकरं रूपं न पश्येत् ॥ ४० ॥
कामाविर्भावकरं सुवस्त्रं सुगृहं सुगन्धं सुगानं यद्यत्तत्त्यजेत् ॥ ४१ ॥
याऽहिभ्य इव पुरुषेभ्यो बिभेति स्वैरिणीभ्यः पुरुषसक्तिनीभ्यश्च सैवोपास्ते ॥४२॥

तस्मादूर्ध्वरेतस्या कौमारव्रतधारिण्यैषा महाविद्या सेव्याऽऽमरणादादेवतासाक्षात्कारतः ॥ ४३ ॥

कौशिकीदीक्षिता न विवाहिता भवेत् ॥ ४४ ॥

**पतिता** तद्वत् ॥ ४५ ॥

न सा विवाहं कुर्यात् ॥ ४६ ॥

**कालिका तारा महाविद्यास्वरूपाणां** विघ्नेशादिवत् ॥ ४७ ॥

यथा घृतमय्याः पुत्तलिकायाः सर्वाण्येवाङ्गानि घृतमयानि ॥ ४८ ॥

एवमानन्दमयं सर्वमानन्दस्य ॥ ४९ ॥

**विघ्नेशस्य** पुष्टिः शक्तिः पाशाङ्कुशाद्यायुधानि वक्षोहाराद्याभरणानि आखुवाहनमित्येतद्विघ्नेशम**यमेके** ॥ ५० ॥

**नैके** ॥ ५१ ॥

अनाद्यनन्तदिव्यशरीरिणमीशमुक्तौ वैषम्यमपीच्छन्ति ॥ ५२ ॥

**विष्णो**र्लक्ष्मीः शक्तिः शङ्खचक्राद्यायुधानि वनमालाद्याभरणानि गरुडो वाहनमित्येतद्विष्णुम**यमेके** ॥ ५३ ॥

**नैके** ॥ ५४ ॥

[१]अनाद्यनन्त० ति ॥ ५५ ॥

**शिवस्य** पार्वती शक्तिर्डमरुत्रिशूलाद्यायुधानि मुण्डमालाद्याभरणानि वृषो वाहनमित्येतच्छिवम**यमेके** ॥ ५६ ॥

**नैके** ॥ ५७ ॥

[२]अनाद्यनन्त० ति ॥ ५८ ॥

**सूर्यस्य** सञ्ज्ञाशक्तिः शङ्खश्चक्रमायुधं कुण्डलाद्याभरणानि हययुगमयो वाहनमित्येतत्सूर्यम**यमेके** ॥ ५९ ॥

**नैके** ॥ ६० ॥

[३]अनाद्यनन्त० ति ॥ ६१ ॥

**कौशिक्या**श्चण्डिका शक्तिः खड्गाद्यायुधानि पङ्कजस्रक्कुण्डलाद्याभरणानि सिंहो वाहनमित्येतत्कौशिकीम**यमेके** ॥ ६२ ॥

वाहन**न्नैके** ॥ ६३ ॥

[४]अनाद्यनन्त० ति ॥ ६४ ॥

**काल्याः** कुरुकुल्लाशक्तिः खड्गमायुधं मुण्डमालाद्याभरणं स एव वाहनम् । महा-

---

१-२-३-४-५ पूर्ववत् इत्यपि पाठः । आह्निक ४ अनाद्यन्तदिव्यशरीरिणमीशमुक्तौ वैषम्यमपीच्छन्ति ॥ ५१ ॥

विद्यायाः बाला शक्तिर्धनुर्बाणायुधं मालाद्याभरणानि स एव वाहनं । तस्मात्कालिकातारामहाविद्यादीनि रूपाणि पृथक् पृथग्विधिना परिचर्य पृथक् पृथक् साक्षात्कारांश्च संपाद्य कौशिकीलोकमेव संपद्यन्ते ॥ ६५ ॥

**नारसिंहा कार्ष्णा** यथा वैष्णवं लोकम् ॥ ६६ ॥

**अथाद्याचारे** ॥ ६७ ॥

दीक्षितो दीक्षाधर्मानुत्सृज्य स्नात्वा स्वगृहं गत्वा दीक्षितान् ब्राह्मणान् सदैवतांश्च सतीर्थ्यांश्चान्यमतिनो ब्राह्मणान् विद्यानिष्णातांश्च भोजयित्वा तदवशिष्टान्धसोऽमृतस्य मुखेन सुखेन ग्रसितुं योग्यान् षोडशग्रासान् गृहीत्वोदगग्रे कुशसंस्तरे ध्यायन्नीशं जपन्मन्त्रमहःशेषं नीत्वा संध्यामुपास्याग्नीनुपास्याभुक्त्वा तस्मिन्नेव संस्तरे स्वपेत् ॥ ६८ ॥

यदि दुःस्वप्नं पश्येत्प्रातर्नियमान्ते गुरवे पङ्कजमर्पयेत्ताम्रं वा ॥ ६९ ॥

अर्पितपङ्कजस्य **शिष्यस्य** दुःस्वप्नं सुस्वप्नमुपजायते ॥ ७० ॥

निद्रालय उत्थाय गुरुमन्त्रेश्वरानन्यच्च सर्वान्ध्यात्वा प्रणम्य स्नानाङ्गन्यासकवचपठनार्चनससमस्तमण्डलजपदिव्यसहस्रनामपाठरूपानैश्वरांश्च निर्वर्त्य गुरुगृहं गत्वाभिवाद्य ततः स्वच्छन्दं विहरेत् ॥ ७१ ॥

पर्वसु विशेषार्चनम् ॥ ७२ ॥

विशेषार्चनं कृताकृतमेके ॥ ७३ ॥

एतन्निर्वर्तनं यावज्जीवं निर्वर्तयेत् ॥ ७४ ॥

निर्वर्तनं दीक्षितोऽनिर्वर्त्य स्यातुमिच्छति यः स नरकं याति सौकरेषु जायते ॥ ७५ ॥

योऽग्निहोत्रमुत्सृज्याविधिना स्वच्छन्दं विहरति तत्पापेन समं वाऽसमम् ॥ ७६ ॥

महापापैः समं वाऽसमम् ॥ ७७ ॥

तस्माद्दीक्षितोऽप्रमादी नित्यनिर्वर्तनं निर्वर्तयेत् ॥ ७८ ॥

**श्रुतिस्मृतिपुराणान्यभ्यसेत्** ॥ ७९ ॥

तद्विदश्च पूजयेत् ॥ ८० ॥

स्वस्ववर्णाश्रमाचारः सेव्यस्तदनुधीमता ॥ ८१ ॥

यत्र वर्णाश्रमे दीक्षितस्तत आश्रमान्तरं न निविशेत् ॥ ८२ ॥

निविष्टः पापीयान्भवति ॥ ८३ ॥

दक्षाचारदीक्षितो निविशेदेके ॥ ८४ ॥

स वामोत्तरयोर्न प्रविशेदेके ॥ ८५ ॥

**प्रविशेदिति केचित्** ॥ ८६ ॥

आद्याचारदीक्षित आद्याचारे दीक्षयेत् ॥ ८७ ॥

इतरादीन दीक्षयेत् ॥ ८८ ॥

अदीक्षिताय यो दद्यान्मन्त्रं वा मार्गमुत्तमम् ॥
स पतेन्नरके घोरे वर्षाणामयुतं समा इति ॥ ८९ ॥
यथा ह्यनुपनीताय कन्यां दद्याद्विमूढधीः ॥
तथा ह्यदीक्षितायैव ददन्मार्गं पतेद्गुरुरिति ॥ ९० ॥
दक्षाचारी दक्षाचारमन्त्रेषु सर्वदेवताकेष्वधिकृतो भवति ॥ ९१ ॥
यथैकवेदोपनीतः सर्ववेदेषूपनीतो भवति ॥ ९२ ॥
अभावे गुरोः प्रतिमातः ॥ ९३ ॥

शालिग्रामादिप्रतिमायामीशमावाह्यासनं दत्वा पारानन्दशास्त्रज्ञातविधिस्ततः सर्वं विभाव्य दीक्षां यथापक्षं निर्वर्त्य यथावर्णमुपदेशं विभाव्य ततः शिष्टैरुपचारैः पाद्याद्यैरुपचर्येशं विसृज्य यथाशास्त्रं नित्यनिर्वर्तनं निर्वर्तयेत् ॥ ९४ ॥

अयं विधिराद्याचार एव नान्यत्र ॥ ९५ ॥
वामाचारो द्विप्रकारो मध्यमोत्तमभेदतः ॥
मद्यमैथुनमुद्राभिर्युक्तोऽसावुत्तमः स्मृत इति ॥ ९६ ॥
मद्यमांसमत्स्यमुद्रामैथुनैर्युक्तो मध्यमः ॥ ९७ ॥
पारानन्दस्याष्टविधहिंसनाभावान्मध्यमं पारानन्दो वर्जयेत् ॥ ९८ ॥
पारानन्दैरुत्तमः सेव्यः ॥ ९९ ॥
**पारानन्दाः** ॥ १०० ॥ ३ ॥
यद्यन्यमतिश्रीचक्रं व्रजेयुः ॥ १ ॥
मांसं मूर्ध्ना प्रणम्य न गृह्णीयुः ॥ २ ॥
येषां वर्णानां दक्षेऽधिकारस्तेषामेव वामतः ॥ ३ ॥

सूर्यसंस्तम्भनप्रवाहप्रवर्तनादसिद्धिमतः पारानन्दाद्ब्राह्मणात्पारानन्दवामाचारदीक्षितो भवेत् ॥ ४ ॥

यथापक्षं निर्वर्तितदीक्षाय **शिष्याय** पूर्वोक्तं यथावर्णं मन्त्रमुपदिशेत् ॥ ५ ॥

मतं मतधर्मांश्चोपदिश्य **श्रुतितन्त्रोक्तान्** पारानन्दाविरुद्धान् धर्मानाचरेदित्युपदिशेत् ॥ ६ ॥

स्वनाम कथयेच्च ॥ ७ ॥
**नाथ**शब्दान्तं नाम **शिष्ये** विदध्या**द्द्वितीये** ॥ ८ ॥
स्वविदितनामा गुरुमभिवादयेत् ॥ ९ ॥
शिष्टं व्याख्यातम् ॥ १० ॥
ब्रह्मक्षत्रवैश्येषु **श्रौतं ताम्रं** वा ॥ ११ ॥
तदितरेषु **ताम्र**मेव ॥ १२ ॥

चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम् ॥

मन्त्रं द्विबीजं वैश्याना शूद्राणां त्वेकबीजकमिति ॥ १३ ॥

क्रमत्रयेऽधिकारी स्याद्वेदहस्तसुसंस्कृतः ॥

स्मृतिसंस्कारभागेन चाचारान् क्रमितुं क्षम इति ॥ १४ ॥

ब्रह्मक्षत्रौ वैश्यशूद्रौ नान्यसंस्कारमर्हतश्च ॥ १५ ॥

नाचारान् क्रमितुं योग्यश्चान्यशास्त्रसुसंस्कृत इति ॥ १६ ॥

एकाक्षरं सर्वेषामेवेति **केचित्** ॥ १७ ॥

**दक्षाचारी** मृते गुरौ कृतप्रयत्नोऽप्यनुद्भूतसिद्धिर्वामाचारं प्रविशेत् ॥ १८ ॥

कृतप्रयत्नोऽप्यनुद्भूतसिद्धिरीषद्भसितदक्षाचारी गुर्वाज्ञप्तो वा ॥ १९ ॥

**वामाचारी** परानन्ददक्षाचार्याज्ञप्तस्तच्छिष्यं वामाचारे दीक्षयेत् ॥ २० ॥

ततो दक्षदीक्षितपूर्वो वामाचारदीक्षितः पूर्वपरिगृहीतान् धर्मान्न हातुमर्हति ॥ २१ ॥

संस्काराभिवादनक्रमेणाभिवाद्य दक्षाभिवादनक्रमेणाभिवाद्य वामाभिवादनक्रमेणाभिवाद्योपचारैर्गुरुं तोषयेत् ॥ २२ ॥

गुरोः पूर्ववत् ॥ २३ ॥

गुर्वन्तरं क्वापि व्रजेन्मन्वन्तरमथापदि ॥

साक्षात्पापमयो ज्ञेयो यो देवान्तरमाश्रयेदिति विज्ञायते ॥ २४ ॥

देवतान्तरमाश्रित इति **केचित्** ॥ २५ ॥

तस्माद्वामाचारेऽपि तद्देवतामन्त्रं गृह्णीयात् ॥ २६ ॥

**अथ द्वितीये** ॥ २७ ॥

दीक्षितो दीक्षाधर्माननुसृत्य स्नात्वा गृहं गत्वोक्तान्भोज्यान् भोजयित्वावशिष्टान्धसोऽमृतस्य षोडशग्रासान्मुखेन सुखेन प्रसितुं योग्यान्गृहीत्वोकन्दाप्रातःकालं नयेत् ॥ २८ ॥

यदि दुःस्वप्नं पश्येत् ॥ २९ ॥

पूर्ववत् ॥ ३० ॥

निद्रालय उत्थाय गुरुमन्त्रेश्वरानन्यच सर्वान्ध्यात्वा प्रणम्यान्प्रणम्य स्नानाह्नसंध्याकवचपठनार्चनसमस्तमण्डलजपदिव्यसहस्रनामपाठस्तवानैश्चर्यौश्च निर्वर्त्य गुरुगृहं गत्वाभिवाद्य ततः स्वच्छन्दं विहरेत् ॥ ३१ ॥

पर्वसु विशेषार्चनम् ॥ ३२ ॥

विशेषार्चनं कृताकृतमेके ॥ ३३ ॥

एतन्निर्वर्तनं यावज्जीवं निर्वर्तयेत् ॥ ३४ ॥

निर्वर्तनं दीक्षितोऽनिर्वर्त्य स्वातुमिच्छति यः स नरकं प्रपद्यते ॥ ३५ ॥

यदनुग्नीनो वेदपठनं वेदार्थं नाधिगच्छति तथापिन सम याज्यनम् ॥ ३६ ॥

सर्ववीरपापै समं वाऽसमम् ॥ ३७ ॥

तस्मादीक्षितोऽप्रमादी नित्य निर्वर्तन निर्वर्तयेत् ॥ ३८ ॥

ऋग्वेदाद्यान्वेदानूर्ध्वाम्नायाद्यानागमानभ्यसेत् ॥ ३९ ॥

तद्विदश्च पूजयेत् ॥ ४० ॥

यत्र वर्णाश्रमे दीक्षितस्तत आश्रमान्तर न निविशेत् ॥ ४१ ॥

द्वितीयाचारदीक्षितो ब्रह्मचर्याद्गृह निविशेदित्येके ॥ ४२ ॥

उत्तराचार प्रविशेदित्येके ॥ ४३ ॥

**नेति केचित्** ॥ ४४ ॥

तान्त्रिकी सध्या कृताकृता ॥ ४५ ॥

अपक्षीयमाणपक्षदीक्षितोऽनुकल्पेन परिचरेदादशम्या ॥ ४६ ॥

मद्यमुद्रामैथुनानि ॥ ४७ ॥

आद्यानुकल्पो गुडमिश्र तक्र रक्तचन्दनवारि च ॥ ४८ ॥

साक्षादेव द्वितीयम् ॥ ४९ ॥

तृतीयानुकल्प करवीरपुष्प योनिपुष्प त्रिदल विल्वपत्र च ॥ ५० ॥

**मद्यदानेन या स्याद्देवतायास्तुष्टिः सैतेन दत्तेन भवत्विति** भावयेत् ॥ ५१ ॥

**मैथुनाह्लादे मया जप्तेन मन्त्रेण या स्याद्देवतायाः प्रीतिः सैतेन दत्तेन भवत्विति** भावयेत् ॥ ५२ ॥

आपूर्यमाणपक्षदीक्षितोऽनुकल्पेन परिचरेदादशम्या ॥ ५३ ॥

दशम्या विशेषार्चन कारयेत् ॥ ५४ ॥

**गुरुणा** ॥ ५५ ॥

गुरु पुष्पाञ्जल्यन्तामर्चां विधाय हुत्वा हवि प्रतिपत्त्यगार प्रविश्यमकारचय-मुररीकृत्य पुनर्देवतागारमागत्य हुत्वा देवता ससमस्तमण्डलामभ्यर्च्य **नवशिष्याय**ालिपात्र समुद्र सव्यञ्जनभोजनसंभार सवेश्याक प्रयच्छेत् ॥ ५६ ॥

**दानमन्त्राः** ॥ ५७ ॥

इद पवित्रममृत गृह्णीष्व भवभेषजम् ॥

पशुपाशसमुच्छेदकारण—भैरवोदितमित्याद्यपात्रम् ॥ ५८ ॥

ईशोच्छिष्टामिमा मुद्रा हार्दसतापनाशिनीम् ॥

गृह्णीष्व हर्षजननीं भोज्यसभारसभृतामिति **द्वितीयपात्रम्** ॥ ५९ ॥

गृह्णीष्व प्रमदा दिव्या प्रमत्ता यौवनान्विताम् ॥

सर्वदानन्दहृदयां स्वसाधनविधायिनीमिति **वेश्याम्** ॥ ६० ॥

**मकारत्रयं तत्सतीर्थेभ्यो दद्यात्** ॥ ६१ ॥

**नव्यविशेषार्चने** तत्सतीर्थ्या एव प्रविशेयुः ॥ ६२ ॥
गृहीतमकारत्रयं नव्यं **शिष्यं कौलिकधर्मानुपदिशेत्** ॥ ६३ ॥
स्वेच्छाऋतुमती शक्तिः साक्षाद्ब्रह्म न संशयः ॥
तस्मात्तां पूजयेद्भक्त्या वस्त्रालंकारभोजनैरिति ॥ ६४ ॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ॥
स्त्रीणां निन्दा न कर्तव्या न च ताः क्रोधयेदपीति ॥ ६५ ॥
विकल्पान्नैव सिद्धिः स्यात्सिद्धिः केवलनिश्चयात् ॥
तस्मान्निश्चयमाश्रित्य जपेन्मन्त्रं विचक्षण ॥ ६६ ॥ इति ॥
**अर्थाद्वा कामतो वापि चापल्यादपि यो नरः ॥**
**लिङ्गयोनिरतो मन्त्री रौरवं नरकं व्रजेदिति** ॥ ६७ ॥
वीरहत्या वृथापानं वीरजायानिषेवणम् ॥
महापापत्रयमिदं कौलिकानां भवेदत इति ॥ ६८ ॥
मन्त्रपूतं कुलद्रव्यं स्ववेश्यां स्वपरकीयां वापि ॥
स्वपत्नीं च सुभोग्यं च दद्याद्वै कुलयोगिने ॥ ६९ ॥ **कौलिकः** ॥
मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं शुभम् ॥
ये पिबन्ति जनास्तेषां स्तन्यपानं न विद्यत इति ॥ ७० ॥
अहो पीतं सुराद्रव्यं मोहयेत्त्रिदशानपि ॥
तन्मद्यं कौलिकः पीत्वा विकारं नाप्नुयात्तु यः ॥
मद्ध्यानैकपरो भूयात्स भक्तः स च कौलिक इति ॥ ७१ ॥
सुरा शक्तिः शिवो भोज्यं मैथुनं भैरवः स्वयम् ॥
तेषामैक्यात्समुत्पन्ने खेशं तत्र विचिन्तयेदिति ॥ ७२ ॥
सुभोग्यं मैथुनं मद्यं त्रयमेतद्ब्रह्मलक्षणम् ॥
तस्मात्तद्विधिना ग्राह्यमन्यथा गरलं हि तदिति ॥ ७३ ॥
देवान्गुरून्समभ्यर्च्य वेदतन्त्रोक्तवर्त्मना ॥
देवं स्मरन् पिबन्मद्यं वेश्यां गच्छन्न दोषभागिति ॥ ७४ ॥
सेवेदात्मसुखार्थं यो मद्यादिकमशास्त्रतः ॥
स याति नरकं घोरं नात्र कार्या विचारणेति ॥ ७५ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
स सिद्धिमिह नाप्नोति न स्वर्गं न परां गतिमिति ॥ ७६ ॥
असंस्कृतं पिबन्मद्यं बलात्कारेण मैथुनम् ॥
सुभोग्यमभिधानेन भुञ्जन्नरकमाप्नुयात् इति ॥ ७७ ॥

स्वेच्छया वर्तमानो यो दीक्षासंस्कारवर्जितः ॥
न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिभि**रिति** ॥ ७७ ॥*
मदप्रच्छादितात्मा च न किंचिदपि वेत्ति चेत् ॥
न ध्यानं न तपो नार्चा न मतं न च सत्क्रिया**मिति** ॥ ७८ ॥
न देवं न गुरुं नात्मविचारं न च कौलिकम् ॥
केवलं विषयासक्तः पतत्येव न संशयः **पिबन्निति** ॥ ७९ ॥
यावन्न चलते दृष्टिर्यावन्न चलते मनः ॥
तावत्पानं प्रकुर्वीत **पशुपान**मितः पर**मिति** ॥ ८० ॥
जीवन्मुक्तः पिबेदेवमन्यथा पतितो भवे**दिति** ॥ ८१ ॥
पुनः पीत्वा पुनः पीत्वा पतित्वा धरणीतले ॥
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते **इति** ॥ ८२ ॥
ततः स्वीकृत्य च **गुरुः शिष्येभ्यः** शेषदो भवे**दिति** ॥ ८३ ॥
स्वगुरुस्वेशयोरग्रे नोपविश्य पिबेद्बवि**रिति** ॥ ८४ ॥
सद्वितीयं पिबेदाद्यं ज्येष्ठाग्रे कौलिकोत्तम **इति** ॥ ८५ ॥
रहस्येव तृतीयं तु कुर्वीत कुलसंमत **इति** ॥ ८६ ॥
तृतीयं आद्यवदिति **केचित्** ॥ ८७ ॥
अत्रैव **नामविधानं केऽपि** ॥ ८८ ॥
द्वितीयाचारदीक्षितो द्वितीयाचारे न दीक्षयेत्तावत् ॥ ८९ ॥
यावन्नैवोत्कटा सिद्धिः सूर्यसस्तम्भनादिका ॥
तावन्न शिष्यान्कुर्वीत वामी वामे तु कर्हिचित् **इति** ॥ ९० ॥
किं वैतान् शासयेति स्वेशस्वध्येयरूपाज्ञतः स्वमे शिष्यान्कुर्वीत ॥ ९१ ॥
तानेव शासयेन्नान्यान् ॥ ९२ ॥
द्वितीयाचारदीक्षितो वामे दीक्षयेत् ॥ ९३ ॥
दीक्षेत् ॥ ९४ ॥
संस्कारेऽपि वामी दीक्षयेत् ॥ ९५ ॥
वामाचारी वाममन्त्रेषु सर्वदेवताकेष्वधिकृतो भवति ॥ ९६ ॥

**यथैकस्मिन्नीश्वरे साक्षात्कृते सर्वेऽपीश्वराः साक्षात्कृता भवन्ति** ॥ ९७ ॥

**इति चोपदिष्टः** ॥ ९८ ॥

**नव्यः शिष्यो** देवता मूर्ध्ना प्रणम्यात्रैवेशाग्रे गुर्वभिवादनम् ॥ ९९ ॥
अभिवाद्य ॥ १०० ॥ ४ ॥
सगणिकः सगणिकसतीर्थ्यमण्डलो **हविःप्रतिपत्त्यगारं** प्रविशेत् ॥ १ ॥

यथोक्ता हवि प्रतिपत्त कुर्यु ॥ २ ॥

**नव्येन** हवि प्रतिपत्तिं नव्यज्येष्ठ वारयेत् ॥ ३ ॥

प्रविष्टेषु तेषु चेशमुद्वास्य जपमन्त्र ध्यायन्नीश तिष्ठेद्गुरु ॥ ४ ॥

ते च हवि प्रतिपत्तिं यथोक्ता कृत्वा गुरुमभिवाद्य तिष्ठेयु ॥ ५ ॥

**नव्यः शिष्यो** गुरुर्वेश्यायै धन दद्यात् ॥ ६ ॥

गुरुस्ता विसर्जयेत् ॥ ७ ॥

आदत्तधना प्राकृता सा यथेच्छ गच्छेत् ॥ ८ ॥

**नव्यः शिष्यः** सतीर्थ्यवेश्याभ्यो धन दत्वा ता विसर्जयेत् ॥ ९ ॥

तास्त्वादत्तधना प्राकृता यथेच्छ गच्छेयु ॥ १० ॥

ता शक्तयो यदि परकीया स्यु ॥ ११ ॥

वस्त्रालकारै सतोष्य विसर्जयेत् ॥ १२ ॥

गुरुस्तदनुकृत तस्मै समर्पयेत्ते च समर्पयेयु ॥ १३ ॥

गुरुमभिवाद्य तसतीर्थ्या यथेच्छ गच्छेयु ॥ १४ ॥

एष **पूर्णाभिषेकः** ॥ १५ ॥

पूर्णाभिषिक्तो **नव्यः शिष्यः** कुसुमहारग धधनरत्नधान्ययानाद्यैर्गुरु तोषयेत् १६

तदशक्त केवलप्रेम्णा ॥ १७ ॥

तत्रैव **गाथामु**दाहरन्ति ॥ १८ ॥

निरपेक्षास्तु गुरवो ब्रह्माण्डानुग्रहक्षमा ॥

कैरुपायै क्व तोष्या करुणामृतसार्थय **इति** ॥ १९ ॥

तोष्यास्ते केवल प्रेम्णा नान्यथा धनराशिभिर्नान्यथा युक्तिकोटिभि**रिति** ॥ २० ॥

सतुष्टो गुरु स्वालय गच्छेत् ॥ २१ ॥

तत साक्षात्कल्पेन वानुकल्पेन नित्यार्चन निवर्तयेत् ॥ २२ ॥

प्राक् साक्षात्कारादनुकल्पेने**त्यपरे** ॥ २३ ॥

तत सविशेषार्चनादौ सर्वत्राधिकृतो भवति ॥ २४ ॥

उत्तर सर्वेभ्य उत्तम ॥ २५ ॥

अत्राधिकारो दिव्यदेवयोनिनानाम् ॥ २६ ॥

मनुष्येषु नात्राधिकार सर्वेषा क्षत्रविट्शूद्रज भनाम् ॥ २७ ॥

अत्राधिकारो ब्राह्मणस्य ॥ २८ ॥

ब्रह्मचारिणोऽतिरिक्तस्याश्रमिणोऽनाश्रमिण ॥ २९ ॥

उत्तरे क्षत्रस्यापीति **कश्चित्** ॥ ३० ॥

सूर्यसंस्तम्भनप्रवाहप्रवर्तनादिसिद्धिमत. पारानन्दादुत्तराचारदीक्षा गृहीयादुत्तराचारिणः ॥ ३१ ॥

जातिवैरोत्सर्गपूर्वकगोव्याघ्राखुमार्जारादीनां स्वप्रभावदर्शितविहाराय यथापक्षं निर्वर्तितदीक्षाय दद्यादेनं मन्त्रमधिकारार्थाय ॥ ३२ ॥

**ॐ त ॐ त्स ॐ वि ॐ तु ॐ र्व ॐ रे ॐ ण्यं ॐ भ ॐ र्गो ॐ दे ॐ व ॐ स्य ॐ धी ॐ म ॐ हि ॐ धि ॐ यो ॐ यो ॐ नः ॐ प्र ॐ चो ॐ द ॐ यात् इति** ॥ ३३ ॥

स यदि संन्यासी चेत्प्रणवम् ॥ ३४ ॥

ततस्तदिष्टेश्वरमन्त्रमुपदेशक्रमेणोपदिशेत् ॥ ३५ ॥

मतं मतधर्मांश्चोपदिश्य श्रुतिमदुक्तयुक्तान्धर्मानाचरेत्युपदिशेत ॥ ३६ ॥

**गुह्यधर्मदशकमुपदिश्योपदिशेत्** ॥ ३७ ॥

वृत्तिं कुर्वन्नयाचितां वर्तेत ॥ ३८ ॥

नेच्छेद्धनं मनुष्येभ्य सेवावृत्तिं चरेन्न च **इति** ॥ ३९ ॥

अयाचिताद्धृतं ग्राह्यमपि दुष्कृतकर्मण **इति** ॥ ४० ॥

सप्रणवत्रयोविंशतिका गायत्रीं जपेत् ॥ ४१ ॥

गुह्यधर्मदशकं कुर्यात् ॥ ४२ ॥

अत्र दीक्षितो जातिकुलगोत्रवर्णाश्रमातीतो भवति ॥ ४३ ॥

परित्यज्य धर्मान्विहितानन्यांश्च ॥ ४४ ॥

गुह्यधर्मदशकमनुतिष्ठंस्तिष्ठेच्छीर्णपर्णाशनः ॥ ४५ ॥

**अथ किंवा** ॥ ४६ ॥

यस्मिन्वर्णाश्रम उत्तराचारलाभ. ॥ ४७ ॥

तद्वर्णाश्रमधर्मान्कुर्वीत ॥ ४८ ॥

सेवावृत्तिमकुर्वंस्तु वृत्तिं कुर्वन्नयाचिता**मिति** ॥ ४९ ॥

तद्वरक्षणमयोः ॥ ५० ॥

तदीक्षितपूर्वंश्चेत् ॥ ५१ ॥

एतदाचारिणो नित्या धर्मा ॥ ५२ ॥

मनुष्येभ्यस्त्यर्थनाहा ॥ ५३ ॥

मनुष्यसेवावृत्त्यकरणम् ॥ ५४ ॥

अयाचितया वृत्त्या वर्तनम् ॥ ५५ ॥

सप्रणवत्रयोविंशतिगायत्रीजप ॥ ५६ ॥

गुह्यधर्मदशकानुवर्तनम् ॥ ५७ ॥

स्वमतानुसंधानम् ॥ ५८ ॥

अन्यमतास्वीकरणम् ॥ ५९ ॥

एष **नित्यो धर्मः** ॥ ६० ॥

औत्तरस्य त्वनित्यधर्मानुष्ठायिन ॥ ६१ ॥

धर्मो गङ्गास्नानभस्मलेपनविहितयज्ञादिस्तेन कृतस्तदभ्युदयाय ॥ ६२ ॥

अभोज्यभोजनसुरापानवेश्यासङ्गमादिरधर्मस्तत्कृतो न तदध पाताय ॥ ६३ ॥

नोच्छ्रयाय च ॥ ६४ ॥

न गुह्यधर्मं पुस्तेषु प्रलिखेन्न वदे**च्छिष्यतोऽन्यतः** ॥ ६५ ॥

औत्तरगुरुवक्त्राब्जवेद्यत्वाद्गुह्यधर्माणाम् ॥ ६६ ॥

प्रलिखन्गुह्यधर्मांस्तु रौरव नरक व्रजे**दिति** ॥ ६७ ॥

ब्रह्महत्याशत तस्य यो वदे**च्छिष्य**तोऽन्यत **इति** ॥ ६८ ॥

अत सूर्यसस्तम्भनप्रवाहप्रवर्तनादिसिद्धिमानेव शिष्य कुर्वीत ॥ ६९ ॥

यावन्नैवोत्कटा सिद्धि सूर्यसस्तम्भनादिका ॥

तावन्न शिष्यान्कुर्वीत ह्युत्तराचारमार्गवान् **कस्मिंश्चित्कथंचित्कंचित्** ॥७०॥

अथ दक्षवामयोरदीक्षितपूर्वोऽपि तयोरधिकृतो भवति ॥ ७१ ॥

उत्तरे मनुष्येषु द्वावेव **शिष्यौ** कार्यौ ॥ ७२ ॥

तत्र ससिद्धयोर्ज्येष्ठ एव **शिष्यं** कर्तुं समर्थ ॥ ७३ ॥

ज्येष्ठससिध्यभावे तदनुज्ञात कनिष्ठ सिद्ध **शिष्यं** कुर्यात् ॥ ७४ ॥

दीपशान्तिं न कुर्वीत विद्याधर्मपरायण **इति** ॥ ७५ ॥

**कश्चिदुत्तरे** दक्षवामयच्छिष्यताहुल्यमिच्छति ॥ ७६ ॥

उत्तराचारमार्गेण परात्मोपासनमीश्वरव**दित्युन्मत्तभैरवः** ॥ ७७ ॥

**आनन्दशब्दान्तं नाम** विदध्यादुत्तरे ॥ ७८ ॥

तस्मादहमपि परानन्द परमानन्द ॥ ७९ ॥

तत्पुरुष महादेव शम्भो रुद्र त्रिलोचन एकवक्त्र चतुर्भुज गिरिजावल्लभ भस्मोद्धूलितदेह श्वेत चन्द्रशेखर पन्नगभूषण त्रिशूलायुध खण्डपरशो डमरुधर पद्महस्त भक्तवत्सल दिव्यलोकेश्वरेत्याद्यै स्तुतोऽपि न तथा हृष्यामि यथा परानन्दपरमानन्देति नामभ्याम् ॥८०॥

नामभिर्मद्भक्तौ तस्मान्मती मद्भक्तो मत्पूजान्ते प्रणवादिनमोन्ताभ्यामाभ्यां पुष्पाञ्जलिं मन्मूर्धनि प्रयच्छेत् ॥ ८१ ॥

एव ब्राह्मण ॥ ८२ ॥

इति परानन्दसूत्रे चतुर्थमाह्निकम् ॥ ४ ॥

ॐ क ऐश्वरो धर्मः ॥ ८३ ॥

किं पुण्यम् ॥ ८४ ॥

किं पापम् ॥ ८५ ॥

अहिंसासत्यमस्तेयं शौचं ब्रह्मचर्यमपरिग्रहो तपः सन्तोषस्वाध्यायेश्वरप्रणिधाना-नीन्द्रियनिग्रहः

आस्तिक्यं वेदपरयोरार्जवं त्वीशसेवनम् ।

दानं मौनं जप शान्तिर्मतशास्त्रानुदर्शनमित्येष आद्य **ऐश्वरधर्मः** ॥ ८६ ॥

संस्कारशास्त्रोक्तं स्वर्गसाधकमग्निष्टोमादिकं **पुण्यम्** ॥ ८७ ॥

शास्त्रनिषिद्धं **पापम्** ॥ ८८ ॥

यावन्ति स्वर्गसाधकानि प्राण्यविहिंसया युतानि तदनुक्तानि तत्समर्पितान्यैश्वर-धर्मायन्ते ॥ ८९ ॥

अनन्योपघातलक्षणकामदानि काम्यानीहैव तदनुक्तानि प्राण्यविहिंसया युतानि तत्समर्पितान्यैश्वरधर्मायन्ते ॥ ९० ॥

ज्ञानी भक्तो दीक्षित ऐश्वरानेव धर्मान्कुर्वीत नो इतरान् ॥ ९१ ॥

अन्ये भक्ता दीक्षिताः सर्वत्रानीहामीश्वरदर्शन एवेहा कर्तुमसमर्थाः ॥ ९२ ॥

ऐश्वरधर्मं निर्वर्त्य पुण्यानि वा सम्पादयेयुः ॥ ९३ ॥

जीवस्य स्वतन्त्रत्वात्परस्मै स्वात्मानं न प्रयच्छेत्कथं श्रावणसर्पबलिदानादौ प्रयच्छति ९४

श्रावणसर्पबलिदानादौ यत्परिदानं तद्यथा कामिनीं कामातुरो वदेत्त्वदीयोऽहं त्वदा-नन्दाय न त्वदीयो भवत्यथ कायवाङ्मनोभिरनाल्हाददां परित्यजति वा कंचित्कविं स्वगृह-मागतं कविर्वदेत्त्वदीया इमे पुत्रास्त्वदीयमिदं गृहं त्वदीयोऽस्मीति वाचा संतोषयति सोऽपि संतुष्टो न तद्गृहं विक्रीणाति न ब्राह्मणाय प्रयच्छति च तस्मादेवं सर्वत्र ॥ ९५ ॥

आर्जवं सर्वत्र कुर्यात् ॥ ९६ ॥

स्वतो न्यूने बालवत्स्वतःसमे सखिवत्स्वतोऽधिके स्वज्येष्ठवदिति वैषम्ये नार्जवम् ९७

संस्कारसंस्कृतो भक्तो दीक्षां गृह्णीयात्ता दत्तस्वात्मो दीक्षितो भवितुमर्हति तस्मादेवं युक्तम् ॥ ९८ ॥

**फलद्वयदं कर्म** ॥ ९९ ॥

साक्षात्फलदं परिणामे फलं प्रयच्छति च ॥ १०० ॥ ५ ॥

कृतं पापं निरयदं परिणतं दुःसङ्गदम् ॥ १ ॥

यथा दुर्वाक्यं ताडनदं परिणतं कारागारप्रवेशदम् ॥ २ ॥

एतद्विपरीतं पुण्ये ॥ ३ ॥

कृत ऐश्वरो धर्मः परमेश्वरहृदि प्रीत्युत्पादकः परिणतः परमेश्वरदर्शनदः ॥ ४ ॥

इति पारानन्दसूत्रे पञ्चममाह्निकम् ॥ ५ ॥

**ॐ अथातः परमानन्दमतं वक्ष्यामः ॥ ५ ॥**

**परमात्मा ॥ ६ ॥**

**ईश्वराः** पृथक् पृथक् ॥ ७ ॥

**जीवाः** पृथक् पृथक् ॥ ८ ॥

**नित्यानन्दः सच्चिदानन्दमयमूर्तिः ॥ ९ ॥**

सर्वतः सुरूपः ॥ १० ॥

सर्वतः सर्वज्ञः ॥ ११ ॥

सर्वतः सर्वेश्वरः ॥ १२ ॥

वेदवाक् ॥ १३ ॥

स्वाभिन्नालङ्कारः स्वाभिन्नायुधः स्वाभिन्नवाहन **इति कालशम्भुः** ॥ १४ ॥

तद्भिन्नानाद्यनन्तालङ्कारायुधवाहना**नीत्युन्मत्तभैरवः** ॥ १५ ॥

अचिन्त्यैश्वर्यः सर्वतः ॥ १६ ॥

अवेद्योऽचिन्त्योऽदृश्यः ॥ १७ ॥

सुसंवेद्यः सुसंचिन्त्यः सुसंदृश्यः ॥ १८ ॥

आकाशपरिच्छिन्नश्च **यो वेद निहितं गुहायां परमे व्योमन्निति** निर्देशात् ॥ १९ ॥

योगफलनिर्देष्टा सर्वतः ॥ २० ॥

सर्वतो योगफलदः ॥ २१ ॥

ईश्वरैरुपास्यः सर्वतः ॥ २२ ॥

ईश्वरोपास्यः सर्वतः ॥ २३ ॥

ईश्वराणां स्वभक्तानां निग्रहानुग्रहक्षमः ॥ २४ ॥

सर्वगम्यः ॥ २५ ॥

क्लेशकर्मविपाकाऽपरामृष्टः सर्वतः ॥ २६ ॥

सर्वगम्यः ॥ २७ ॥

सर्वोत्पत्तिकृत् ॥ २८ ॥

सर्वस्थितिकृत् ॥ २९ ॥

सर्वनिर्विघ्नकृत् ॥ ३० ॥

सर्वप्रकाशकृत् ॥ ३१ ॥

सर्वप्रलयकृत् ॥ ३२ ॥

सर्वेशिषादः ॥ ३३ ॥

साक्षादीश्वरनिग्रहानुग्रहकृत् ॥ ३४ ॥

साक्षात्तपःफलदः ॥ ३५ ॥

साक्षात्परामुक्तिदः ॥ ३६ ॥
साक्षाज्जीवन्परामुक्तिद इत्युन्मत्तभैरवः ॥ ३७ ॥
परमानन्दस्थानः ॥ ३८ ॥
अनाद्यनन्तः परमात्मा ॥ ३९ ॥
एभिः सूत्रैरेष परमात्मा वर्णितो मयि कृपाकटाक्षं विदधातु ॥ ४० ॥
एतद्विदसाँश्च प्रीणाति ॥ ४१ ॥
**अथ परमात्मनः परमानन्दलोकं वक्ष्यामः ॥ ४२ ॥**
परमात्मलोकः ॥ ४३ ॥
असङ्ख्ययोजनविस्तीर्णः सर्वतः ॥ ४४ ॥
**सर्वस्यायतनं महदिति** ह तद्विज्ञायते ॥ ४५ ॥
**यद्गता न निवर्तन्ति भूयः** ॥ ४६ ॥
यत्र परमात्मा विहरति ॥ ४७ ॥
यत्रेश्वराः परमात्मध्यानासक्ता विहरन्ति ॥ ४८ ॥
यत्र जीवा मुक्ताः साद्यनन्तदिव्यदेहाः परमात्मध्यानासक्ता विहरन्ति ॥ ४९ ॥
युवा स्यात्साधु युवाध्यापकः' ॥ ५० ॥
आशिष्ठो दृढिष्ठो बलिष्ठः ॥ ५१ ॥
अस्येयं पृथिवी सर्वा वित्तैः पूर्णा स्यात् ॥ ५२ ॥
स एको मानुष आनन्द. ॥ ५३ ॥
ते ये शतं मानुषा आनन्दाः ॥ ५४ ॥
स एको मनुष्यगन्धर्वाणामानन्दः ॥ ५५ ॥
ते ये शतं मनुष्यगन्धर्वाणामानन्दाः ॥ ५६ ॥
स एको देवगन्धर्वाणामानन्दः ॥ ५७ ॥
ते ये शतं देवगन्धर्वाणामानन्दाः ॥ ५८ ॥
स एकः पितॄणा चिरलोकलोकानामानन्द. ॥ ५९ ॥
ते ये शतं पितॄणा चिरलोकलोकानामानन्दाः ॥ ६० ॥
स एक आजानजानां देवानामानन्दः ॥ ६१ ॥
ते ये शतमाजानजानां देवानामानन्दाः ॥ ६२ ॥
स एकः कर्मदेवानामानन्दः ॥ ६३ ॥
ते ये शतं कर्मदेवानामानन्दाः ॥ ६४ ॥
स एको देवानामानन्दः ॥ ६५ ॥
ते ये शतं देवानामानन्दाः ॥ ६६ ॥

स एक इन्द्रस्यानन्दः ॥ ६७ ॥
ते ये शतमिन्द्रस्यानन्दाः ॥ ६८ ॥
स एको बृहस्पतेरानन्दः ॥ ६९ ॥
ते ये शतं बृहस्पतेरानन्दाः ॥ ७० ॥
स एकः प्रजापतेरानन्दः ॥ ७१ ॥
ते ये शतं प्रजापतेरानन्दा. ॥ ७२ ॥
स एको ब्रह्मण आनन्दः ॥ ७३ ॥
ते ये सहस्रं ब्रह्मण आनन्दाः स एको विष्ण्वादीनामानन्द **इत्येके** ॥ ७४ ॥
ते ये विष्ण्वादीनामीश्वराणामसंख्याता आनन्दाः स एक आनन्दो यत्र समः सर्वेषामृते परमात्मनः ॥ ७५ ॥
अनिर्देश्योऽनिर्वाच्योऽग्राह्योऽगम्यः सर्वेषा परमात्मन आनन्दः ॥ ७६ ॥
यत्रानाद्यनन्ताः कुतः ॥ ७७ ॥
यत्रानाद्यनन्ता आपस्तेजांसि वायवः ॥ ७८ ॥
न यत्रानाद्यनन्तास्तरवः ॥ ७९ ॥
न यत्र मृगाः पक्षिण· ॥ ८० ॥
यत्र सर्वे मानुषविग्रहाः ॥ ८१ ॥
यत्र सर्वे अनिर्देश्यवपुषः ॥ ८२ ॥
यत्र सर्वे समानन्दा· ॥ ८३ ॥
यत्र सर्वे षड्रायनाः ॥ ८४ ॥
**न यत्र स्त्रीविग्रहः कश्चित्** ॥ ८५ ॥
यत्र सर्वे पूरुषविग्रहा. ॥ ८६ ॥
**न यत्रैष सूर्यो नैते पावका नैषश्चन्द्रो नेमा विद्युतो भान्ति** मर्त्याः ॥ ८७ ॥
यत्र सर्वे साद्यनन्तदिव्यदेहा जीवाः ॥ ८८ ॥
न यत्रेदं किंचन मर्त्यम् ॥ ८९ ॥
यत्राद्यन्तं वा न यत्र किंचित्सादिसान्तम् ॥ ९० ॥
न यत्र मर्त्या सुविशन्ति नार्तास्तं विद्धि परमानन्दलोकसंज्ञम् ॥ ९१ ॥
स एष परमानन्दलोकः सूत्रैर्वर्णित. ॥ ९२ ॥
सूत्रैर्वर्णितलोका चितिर्मयि कृपा निदधातु ॥ ९३ ॥
यो विद्वानेनं वेत्ति स मा तर्पयति सर्वतः सर्वानीश्वरांश्च ॥ ९४ ॥
स एषोऽनाद्यनन्तलोकः स एष परानन्दलोकः स एषः पराख्यो लोकः स एषः

परमाख्यो लोकः स एषः परमात्मलोकः स एष परामुक्तयाख्यो लोको यो वेद विद्वानेनं सोऽमृतत्वाय कल्पते ॥ ९५ ॥

**ईश्वरा**स्तूक्तलक्षणाः ॥ ९६ ॥

तदुदरतः **सर्वज्ञाः** ॥ ९७ ॥

तदुदरतः **सर्वेश्वराः** ॥ ९८ ॥

**तन्त्रवाक्याः** ॥ ९९ ॥

**अचिन्त्यैश्वर्या**स्तदुदरतः ॥ १०० ॥ ६ ॥

अदृश्याः ॥ १ ॥

सुसंदृश्याः ॥ २ ॥

आकाशपरिच्छिन्नाश्च परमात्माज्ञप्ताः ॥ ३ ॥

योगफलनिर्देष्टारः ॥ ४ ॥

योगफलालिप्ताः ॥ ५ ॥

योगफलदास्तदाज्ञया ॥ ६ ॥

जीवैरुपास्याः ॥ ७ ॥

जीवैरुपासिताः ॥ ८ ॥

जीवानां निग्रहानुग्रहक्षमाः ॥ ९ ॥

सर्वे सर्वकर्तारः ॥ १० ॥

ऐश्वरधर्मतोष्याः ॥ ११ ॥

ऐश्वरधर्मकृद्गम्याः ॥ १२ ॥

**अथ विशेषतोऽधिकृताः** ॥ १३ ॥

उत्पत्तौ **ब्रह्मा** ॥ १४ ॥

स्थितौ **विष्णुः** ॥ १५ ॥

प्रलये **शिवः** ॥ १६ ॥

नैर्विघ्ने **विघ्नेशः** ॥ १७ ॥

ज्ञाने **कौशिकी** ॥ १८ ॥

प्रकाशे **सूर्यः** ॥ १९ ॥

मुक्तिदाः ॥ २० ॥

**ईश्वरा अनाद्यनन्ताः** ॥ २१ ॥

**जीवा** ज्ञानवन्तोऽणुरूपाः कर्तारो योगफलभोक्तार आमुक्तेः ॥ २२ ॥

मनसा युक्तास्तत्तदिन्द्रियसौम्ययुजः ॥ २३ ॥

अनाद्यनन्ता अणुरूपा **जीवाः** ॥ २४ ॥

ज्ञानरूपा **इत्येके** ॥ २५ ॥

परमानन्दलोकैकदेशः **सानन्दाख्यो** बहिर्मुखः ॥ २६ ॥

आगते प्रतिसंचारे **खण्डपरशुः** कृतपापान्कृतपुण्यांश्च सानन्दे स्थापयति ॥२७॥

न यत्र कृतपुण्याः प्रहृष्यन्ते च नोद्विजन्ते कृतपापाः ॥ २८ ॥

खण्डपरशुर्भूमीरप्सु प्रलीनाः कुरुते ॥ २९ ॥

खण्डपरशुरपस्तेजःसु प्रलीना. कुरुते ॥ ३० ॥

खण्डपरशुस्तेजांसि वायुषु प्रलीनानि कुरुते ॥ ३१ ॥

खण्डपरशुर्वायूनाकाशे प्रलीनान् कुरुते ॥ ३२ ॥

आकाशोऽनाद्यनन्ते प्रतिष्ठितो भवति ॥ ३३ ॥

खण्डपरशुः स्वशस्त्रायुधवाहनालङ्कारान्स्वस्मिन्लीनान्कृत्वा साद्यनन्तदिव्यदेहैः स्वभक्तैः सार्कं परमानन्दं प्रविशति ॥ ३४ ॥

**ईश्वरास्त्वेवं सर्वे** ॥ ३५ ॥

सायुधाः सालङ्काराः प्रविशन्ति स्वभक्तैः सार्धं परमानन्द**मिति कश्चित्** ॥३६॥

महाप्रलये समुपस्थिते परमानन्दलोकप्रवेशाय यदेश्वराः स्वान्स्वाँल्लोकान्परित्यजन्ति तदा तैस्त्यक्तास्ते लोका दीपवन्नाशमभिगच्छन्ति ॥ ३७ ॥

परमात्मा ज्ञापयामास कदाचिदीश्वरानाशस्तास्ते शून्ये आगत्य ध्यायन्तः परमात्मानं जपन्तः परमात्मनः परमं मनुमतिष्ठन्नीश्वराः ॥ ३८ ॥

परमात्मा बहिर्मुखे सानन्द आगत्य कांश्चिज्जीवसत्तमं विहितानुष्ठाय्यैश्वरधर्मवदीश्वरत्वेन परिणतं कृत्वा ज्ञापयामास परमानन्द प्रविष्टा **न निवर्तन्ति भूय** इति ह विज्ञायते तस्मादिति **केचित्** ॥ ३९ ॥

तथैव नीत्वा कतिचित् कालान्स्वं स्वं लोकं दिव्यमीश्वरानन्दनन्तं ईश्वरास्तपसा चक्रुः ॥ ४० ॥

उद्धृताल्ङ्कारायुधशक्तिवाहनाश्चाभवन् ॥ ४१ ॥

ईश्वराः सायुधा. सालंकारा. स्वभक्तानैश्वरधर्मवतो जीवान्सानन्दस्थान् शक्तिवाहनपारिषदत्वेन परिगृह्णन्तीति **कश्चित्** ॥ ४२ ॥

ब्राह्मो लोको **ब्रह्मणः** सत्यलोकाख्यः ॥ ४३ ॥

वैष्णवो लोको **विष्णोर्**वैकुण्ठाख्यः ॥ ४४ ॥

शैवो लोकः **शिवस्य** श्वेतलोकाख्यः ॥ ४५ ॥

वाक्रतुण्डो लोको **वक्रतुण्डस्य** सानन्दभुवनाख्यः ॥ ४६ ॥

कौशिकेयो लोकः **कौशिक्या** महापुराख्यः ॥ ४७ ॥

सौर्यो लोकः **सूर्यस्य** महामण्डलाख्य. ॥ ४८ ॥

येषु लोकेष्वीश्वरानिर्विशेषानन्दाः सर्वे जीवाः ॥ ४९ ॥

येषु गता **न निवर्तन्ति भूयः** ॥ ५० ॥

न येषु स्त्रीविग्रहः कश्चिदन्यत्रेश्वरशक्तिभ्यः ॥ ५१ ॥

त ऐश्वरा लोकाः षट्पुरोपमाः ॥ ५२ ॥

आदौ स्थित्वा ब्रह्माकाशाद्वायून्वायुभ्योऽग्नीनग्निभ्य आपोऽद्भ्यः पृथिव्यः ॥ ५३ ॥

पृथिवीभ्योऽन्नमेवं त्रिलोकीं पुण्यपापोचितां दशां च चकार ॥ ५४ ॥

तत्र कनकाचलं मेरुं चकार च ॥ ५५ ॥

यस्मिन् षट्शिखरपुरोत्तमानि ॥ ५६ ॥

षडीश्वराणां तानि ॥ ५७ ॥

**ब्रह्मशिखाख्यं ब्रह्मणः** ॥ ५८ ॥

**श्वेतद्वीपाख्यं विष्णोः** ॥ ५९ ॥

**कैलासाख्यं परमानन्दस्य** ॥ ६० ॥

**रक्तशिखराख्यं दन्तिनः** ॥ ६१ ॥

**ज्ञानपुराख्यं कौशिक्याः** ॥ ६२ ॥

**प्रकाशाख्यं सूर्यस्य** ॥ ६३ ॥

तेभ्यो नीचै**रिन्द्रादीनां** शिखराणि ॥ ६४ ॥

यथेश्वरास्तेषु लोकेषु तथैतेषु शिखरेषु सर्वदा तिष्ठन्ति ॥ ६५ ॥

नाशांशीभावश्चैकस्मिन्नीश्वरे ॥ ६६ ॥

सजातीयानां समुदाये किंचिन्न्यूनोंऽशस्तस्यासंभवश्चैकस्मिन्नीश्वरे ॥ ६७ ॥

कृत्वा सहस्रधात्मानं चरेदीश्वरस्तन्मूर्तिष्वविशेषदर्शनात् ॥ ६८ ॥

एकस्मिन्नेव काले कोटिशो भक्तान् पृथक् पृथक् दर्शनादिना विशेषेणानुगृह्णाति तद्दर्शनात् ॥ ६९ ॥

यत्र भक्ता यतोऽनुध्यायन्ति तत आविर्भवतीश्वरस्याचिन्त्यैश्वर्यत्वात् ॥ ७० ॥

नैतदद्भुतमीश्वरे ॥ ७१ ॥

अंशांशीभावः पृथ्वी-नीर-तेजो-वायुषु दिव्येषु च ॥ ७२ ॥

तस्मादेते निरन्ताः ॥ ७३ ॥

तस्यां त्रिलोक्यां बहिर्मुखस्थान्जीवान्ब्रह्मानयत् ॥ ७४ ॥

त्रयो लोकाः कल्पानि यस्मात्तस्मादेषा **त्रिलोकी** त्रिकल्पा ॥ ७५ ॥

तत्र पापफलभोक्तॄन्भगवानानय**न्नरलोके** ॥ ७६ ॥

पुण्यफलभोक्तॄन्भगवानानयत्**स्वर्गे लोके** ॥ ७७ ॥

ऐश्वर्यधर्मफलभोक्तॄन्स्वान्भक्तान् दर्शनदानादिभिर्विविधैः प्रत्यगृह्णन् ॥ ७८ ॥

**तामसा**न्जीवान् तीर्यग्जन्मनि ब्रह्मापातयत् ॥ ७९ ॥

**राजसा**न्जीवान्मानुषे ब्रह्मापातयत् ॥ ८० ॥

**सात्विका**न्जीवान्दैवे ब्रह्मापातयत् ॥ ८१ ॥

इन्द्रादिभ्यो यथायथमधिकारान्ददौ ब्रह्मा ॥ ८२ ॥

पालयामास **विष्णुः** ॥ ८३ ॥

प्रज्ञां प्रकरोत्**कौशिकी** ॥ ८४ ॥

निर्विघ्नमकरोद्**गणेशः** ॥ ८५ ॥

प्रकाशयामास **सूर्यः** ॥ ८६ ॥

उज्जहा**रोग्रः** ॥ ८७ ॥

ऋग्वेदादीन्वेदानावर्तयन्ब्राह्मणादीन् वाऽसृजदिति ॥ ८८ ॥

ब्राह्मणास्तपसा युक्ताश्चक्रुः स्वं स्वं संस्कारशास्त्रं तथैव स्वं स्वं मतं शुभं चक्रुः ॥८९॥

**ऋषयः** स्थापयामासुः स्वं स्वम् ॥ ९० ॥

**वेदः** परात्मजागेति **केचित्** ॥ ९१ ॥

**वेदो**ऽपीश्वरवाक् वेदानामप्यवेद्यत्वात्परात्मनः ॥ ९२ ॥

कस्तर्हि परात्मानं वदेत् ॥ ९३ ॥

तस्मादेते निरस्ताः ॥ ९४ ॥

**पदार्थाश्चतुर्विधाः** ॥ ९५ ॥

अनाद्यनन्तसाद्यनन्तानादिसान्तसादिसान्ताः ॥ ९६ ॥

परमात्मेश्वरा जीवा दिक्कालाकाशपरमानन्दलोकाश्च**नाद्यनन्ताश्च** ॥ ९७ ॥

ऐश्वरा दिव्यदेहाश्च **साद्यनन्ताश्च** ॥ ९८ ॥

जीवसंसरण**मनादिसान्तं** च ॥ ९९ ॥

एतच्छेषं **सादि सान्तम्** ॥ १०० ॥ ७ ॥

करणैर्ग्राह्यं **मूर्तम्** ॥ १ ॥

सर्वमूर्तसंयोगित्वं **व्यापकत्वम्** ॥ २ ॥

दिक्कालाकाशात्मनां च **व्यापकत्वम्** ॥ ३ ॥

**दिशः** परिच्छेदिकाः परिच्छिन्नाः ॥ ४ ॥

**कालः** परिच्छेदकः परिच्छिन्नः ॥ ५ ॥

**आकाशश्च** परिच्छेदकः परिच्छिन्न. ॥ ६ ॥

**पृथ्वीनीरतेजोवायवो**ऽणुशः परस्परं भिन्नाः परिच्छेदकाश्च ॥ ७ ॥

**द्विविधं कर्म संचितं क्रियमाणं च** ॥ ८ ॥

ज्योतिष्टोमादिना स्वर्गं कर्तेति ॥ ९ ॥

ज्योतिष्टोमादिना गन्धकाम्निसयोगे यथा दीपज्योतिरुदेलेव स्वर्गे उत्पद्यतेऽस्य प्राणालय **इति स्मशाननिलयः** ॥ १० ॥

प्राणहिंसनादिना नरक कर्तेति ॥ ११ ॥

यमो राजा स्वपुम्भि पापकर्तृन्नरक लोक नयति ॥ १२ ॥

शक्राग्नियमाद्य स्वै स्वे पुमिर्यथायथ पुण्यकर्तृन्यथायथ स्व स्व स्वर्गलोक नयन्ति ॥ १३ ॥

योगैर्योगेष्वन्यतमेन वा योगेन स्वेश्वर स्वध्येयरूप दिव्येन चक्षुपा पश्यति ततो लब्धवरो भवति य सैषा **जीवन्मुक्तिः** ॥ १४ ॥

अचिन्त्यैश्वर्य सर्वत **परमात्मनः** ॥ १५ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **ईश्वराः परा जीवन्मुक्ताश्च** ॥१६॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **जीवन्मुक्ताः** ॥ १७ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **प्रजापतयः** ॥ १८ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्यो **बृहस्पतिः** ॥ १९ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या**वग्नीषोमौ** ॥ २० ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **शक्रादयश्च** ॥ २१ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **देवाः** कर्मपुरस्कृता ॥ २२ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **आजानजा** देवा ॥ २३ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **पितर**श्चिरलोकलोका ॥ २४ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **देवगन्धर्वाः** ॥ २५ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्या **मनुष्यगन्धर्वाः** ॥ २६ ॥

तदुदरतोऽन्यत सर्वत अचिन्त्यैश्वर्य साधुर्युवाशिष्टो द्रढिष्ठो बलिष्ठ सर्वा पृथ्वीं **योऽनुशास्त्य**व्याहताज्ञ ॥ २७ ॥

**एवमेव स्वेच्छाविहारादिकं व्याख्यातं सर्वेषाम्** ॥ २८ ॥

तस्मात्स एष जीवन्मुक्त अचिन्त्यैश्वर्य स्वेच्छाविहार आस्ते ॥ २९ ॥

कदाचिज्जातब्राह्मणस्पर्श इवास्ते ॥ ३० ॥

कदाचिच्छूद्रयोनुद्भूतस्तदनुकूला वृत्ति कुर्वन्नास्ते ॥ ३१ ॥

कदाचिद्वैश्यकुलोत्पन्नस्तदनुकूलां वृत्ति कुर्वन्नास्ते ॥ ३२ ॥

कदाचित्क्षत्रियकुलोत्पन्नस्तदनुकूला वृत्ति कुर्वन्नास्ते ॥ ३३ ॥

कदाचिद्ब्रह्मकुलोत्पन्नस्तदनुकूलां वृत्ति कुर्वन्नास्ते ॥ ३४ ॥

कदाचिच्चातुराश्रम्यधर्मान्कुर्वन्नास्ते ॥ ३५ ॥

कदाचिद्विप्रकुलोत्पन्नः स्नातकः कृतविवाहः सुधृताद्भुतयौवनसौन्दर्यो लावण्यवज्र-संहननाङ्गो रवौ मध्यंगते भिक्षार्थं पर्यटन्नास्ते ॥ ३६ ॥

देवतासाक्षात्कारसाधनानि कुर्वन्**देवतासाक्षात्कारा**ँश्च संपादयन्नास्ते ॥ ३७ ॥

हत्वा राज्ञः स्ववशं नीत्वा सर्वान्माण्डलिकान् राज्ञः प्रजाश्च सम्राडिव वसन्नास्ते ॥ ३८ ॥

वा **मतानि** संस्थापयन् **धर्मांश्च** संस्थापयन्नास्ते ॥ ३९ ॥

वा रणरङ्गकर्कश एको ऽसिना धर्मारियोधानां मुण्डानि छिन्दन् रुधिरदिग्धाङ्ग आस्ते ॥ ४० ॥

वा **दानानि** ददन्नास्ते ॥ ४१ ॥

वा सर्वं **भूतजातं** दण्डवत्**प्रणमन्**नास्ते ॥ ४२ ॥

वार्थपत्नीभिः, कामपत्नीभिर्मैरेयं पिबन्तीभिः सुभोज्यानि भुञ्जतीभिर्मनोऽनुकूल-यौवनसौन्दर्यलावण्यभाषणगुणवेषाभिः सार्कं **भुञ्जन्पिबन्**नास्ते ॥ ४३ ॥

वा धर्मपत्नी**भिर्होमादीनुत्तरक्रत्वन्तान्** कुर्वन्नास्ते ॥ ४४ ॥

वा **जीवन्मुक्तलक्षणानि** धारयन्नास्ते ॥ ४५ ॥

वा पञ्चत्वं प्राप्य **परशरीराविष्ट** आस्ते ॥ ४६ ॥

वा **अणिमादिभिर्युक्त** आस्ते ॥ ४७ ॥

वा **योगसिद्धी**र्दर्शयन्नास्ते ॥ ४८ ॥

वा कुष्ठी व्याधितो यक्ष्मादिभी **रोगैर्गृहीत** आस्ते ॥ ४९ ॥

वा पञ्चत्वं प्राप्य **नरकेषु** पतन्नास्ते ॥ ५० ॥

वा **स्वर्गेषु रमन्**नास्ते ॥ ५१ ॥

वा सुरापानब्रह्महत्यास्वर्णस्तेयादीनि **घोराण्येनांसि कुर्वन्**नपि दुःखान्यपरामृ-शन्नेवास्ते ॥ ५२ ॥

एवं जीवन्मुक्त ईश्वरदर्शनाह्लादाब्धिमज्जित अनियताचारः स्वतन्त्रः स्वेश्वरनियन्त्रित ईश्वरदासः क्लेशकर्मविपाकापरामृष्टो यथा पुष्करपर्णं जलं धारयन्तज्जलेपमपरामृशन्वा हीरकः पांसुषु निमज्जन्नपि तज्जं मलमपरामृशन्नास्त एवं पुण्यापुण्यजमपरामृशन्नास्ते वा बालेभ्यो बलाढ्यः पराजयं परामृशति तानेव वा पराजितान्कुरुते स्वेच्छयैवमयं कर्माविवशः कर्मफलानि भुञ्जन्वाभुञ्जन्सत्यसंकल्प **ईश्वराधीन** आस्ते ॥ ५३ ॥

एवं स्वेच्छाविहारानिर्विण्णः सादिसान्तदिव्यवपुः कनकाचले **स्वेश्वरशिखरम-धिरोहति** ततो **न पुनरावर्तते** आवृत्तः स्वेश्वराज्ञयेश्वरवत् ॥ ५४ ॥

तत्राराध्येश्वरं तत्कृपया गृहीताज्ञ ईश्वरकृपया साधनन्तदिव्यवपुरनिर्देश्यको महता रयेणोर्ध्वं ब्रह्माण्डं भित्त्वा **स्वेशलोकमेति ततः पुनरावर्तते** भीचैः ॥ ५५ ॥

**एषा कैवल्यमुक्तिः** ॥ ५६ ॥

**जीवन्मुक्तिकैवल्यमुक्त्योर्विशेषः** ॥ ५७ ॥

**पराजीवन्मुक्त** ईश्वरसदृशाह्लादः ॥ ५८ ॥

वैवंविहरन्नास्ति अयम् ॥ ५९ ॥

स्वेच्छाविहारनिर्विण्णः साधनन्तं दिव्यवपुरनिर्देश्यश्रीको महता रयेणोर्ध्वं ब्रह्माण्डमित्त्वैश्वरान् लोकान् समतीत्य परात्मभक्तः परमानन्दमेति ॥ ६० ॥

**न स पुनरावर्तते** ॥ ६१ ॥

एषा **परा कैवल्यमुक्तिः** ॥ ६२ ॥

पराजीवन्मुक्त्यानन्दात्पराकैवल्य**मुक्त्यानन्दो विशिष्यते** ॥ ६३ ॥

**अविशिष्यत इति केचित्** ॥ ६४ ॥

तावदेवायं **कर्मविवशः** यावन्न मुक्तो भवति ॥ ६५ ॥

**मुक्तस्यास्य कर्माणि** पराङ्मुखानि भवन्ति ॥ ६६ ॥

यथा संसृष्टाग्नेर्बीजादङ्कुरप्ररोहो निवर्तते ॥ ६७ ॥

न कर्मफलभोगानामन्तः कुत्रापि विद्यते तस्माद्यदैवोत्पन्नविज्ञानो भवेत्तदैवायं स्वमुक्त्यै यतेत चतुर्भिश्चतुर्णामेकेन वा ॥ ६८ ॥

एकस्मिन्नेकेनाङ्गेन यतेतेत्यु**न्मत्तभैरवः** ॥ ६९ ॥

परात्मपरमात्मपरमेश्वर परमेश्वरेष्ट विशिष्ट शिष्टेष्ट परमपरात्परेश्वरोपास्यपरममन्त्रदेवतापरानन्देश परमानन्देश सर्वेश सर्वेश्वरानिर्देश्यानन्दाचिन्त्यैश्वर्यकरुणामृतवारिधे सर्वगम्य प्रणववाच्य परब्रह्मदेवताचिच्चेत्येतै**र्नामभिः स्तुत्यः** ॥ ७० ॥

**विशेषतो नामान्युक्तानि परात्मनः** ॥ ७१ ॥

**सर्वैः शब्दैर्वाच्यः परात्मा** ॥ ७२ ॥

परात्मभक्ताः परात्मोपासकाः परात्मधनाः परात्मसाधार्ष्या अचिन्त्यैश्वर्या ईश्वरा ईशाः परात्मध्यानतत्पराः सम्मान्यतमाः ब्रह्माणि दैवतदेवताः देवदेवताः देवताः परात्मानः **इत्येतैर्नामभिः स्तुत्या ईश्वराः** ॥ ७३ ॥

**विशेषतो नामान्युक्तानीश्वराणाम्** ॥ ७४ ॥

सर्वैः शब्दैर्वाच्या ईश्वराः ॥ ७५ ॥

जीवाः यज्ञकर्तारो यज्ञेज्या अमृतपाः अक्षरक्रीडाः सुराः तारुण्यदशास्त्रिदशाः प्रणववाच्याः दिव्याः देवाः दिवौकसः अजराः सादिसान्तदिव्यदेहाः सात्त्विकाः ईश्वरनियम्याः विबुधाः खचराः ब्रह्माणि देवताः **मानुपदेवताः** ॥ ७६ ॥

**विशेषतो नामान्युक्तानि देवानाम्** ॥ ७७ ॥

**सर्वैः शब्दैर्वाच्या देवाः** ॥ ७८ ॥

जीवाः मानुषाः वर्णिनः आश्रमिणः मनुजाः **पुरुषाः** नरः वस्तूनि ॥ ७९ ॥

**विशेषतो नामान्युक्तानि मानुषाणाम्** ॥ ८० ॥

**राजसाः** अखिलफलभोगसाधकाः कर्तारः स्तोतारः स्तुत्याः ब्रह्माणि आत्मानः ईश्वराः ॥ ८१ ॥

पुनर्विशेषतो नामान्युक्तानि **मानुषाणाम्** ॥ ८२ ॥

**सर्वैः शब्दैर्वाच्या मानुषाः** ॥ ८३ ॥

**जीवाः** प्राणिनः तामसाः भूचराः खेचराः जलचराः जडदेहाः चरदेहाः खेचराः आकाशचराः भूचराः व्याचराः जलचराः नीरचराः क्षोणीस्थाः क्षितिस्थाः ॥ ८४ ॥

**विशेषतो नामान्युक्तानि तिरश्चीनानाम्** ॥ ८५ ॥

**सर्वैः शब्दैर्वाच्यास्तिरश्चीनाः** ॥ ८६ ॥

ग्राह्याः **पदार्थाः** वस्तूनि आकृतयः ॥ ८७ ॥

**विशेषतो नामान्युक्तानि पदार्थानाम्** ॥ ८८ ॥

**सर्वैः शब्दैर्वाच्याः पदार्थाः** ॥ ८९ ॥

**सर्वे शब्दाः सर्वार्थवाचकाः** ॥ ९० ॥

व्याकरणं सञ्ज्ञाप्रकरणं आत्मवाक्यमर्थो लिङ्गं प्रकरणं पदच्छेदः स्वरोऽन्वयश्चैतैः परिभावितो दृष्ट **एकः शब्दोऽनेकार्थवाचकोऽप्येकार्थमेव वक्ति** ॥ ९१ ॥

प्रत्यक्षानुमानागमाः **प्रमाणानि** ॥ ९२ ॥

प्रत्यक्षागमो प्रमाणमित्य**परे** ॥ ९३ ॥

आगम एव **प्रमाणमित्येके** ॥ ९४ ॥

इति पारानन्दसूत्रे षष्ठमाह्निकम् ॥ ६ ॥

ॐ **अथाभिवादनक्रमं वक्ष्यामः** ॥ ९४ ॥

योनज्येष्ठा विद्याज्येष्ठा तपोज्येष्ठा वीर्यज्येष्ठा धनज्येष्ठा महत्संप्रयोगज्येष्ठा महान्तश्चैतेऽ**भिवाद्याः** ॥ ९५ ॥

क्षत्राणामभिवाद्या **ब्राह्मणा** योनज्येष्ठत्वात् ॥ ९६ ॥

एवमेवावराणां **वर्णानां पूर्वे** ॥ ९७ ॥

मातृपितृमातुलपितृव्यश्वशुरादयो**ऽभिवाद्या** योनज्येष्ठत्वादेवैतेषाम् ॥ ९८ ॥

**वयोज्येष्ठा** अभिवाद्या योनज्येष्ठत्वादेवैतेषाम् ॥ ९९ ॥

**विद्वांसो**ऽभिवाद्या ज्येष्ठत्वादेतेषाम् ॥ १०० ॥ ८०० ॥

**तपस्विनो**ऽभिवाद्यास्तपोज्येष्ठत्वादेतेषाम् ॥ १ ॥

**परात्मोपासका ईश्वरा ईश्वरोपासका जीवा गुरुपादुकाश्चाभि**वाद्या महत्सप्रयोगज्येष्ठत्वादेतेषाम् ॥ २ ॥

**परात्मेश्वरगुरवो**ऽभिवाद्या महत्त्वादेतेषाम् ॥ ३ ॥

**आश्रमे पूर्वस्मादुत्तरो महान्** ॥ ४ ॥

महत्संप्रयोगे पश्चात्संयुक्तात्पूर्वसंयुक्तो महान् ॥ ४ ॥

विप्रवर्णैर्विद्याविदोऽभिवाद्याः ॥ ५ ॥

**विद्यावद्भिर्वैद्यास्तपस्विनश्च** ये स्युस्तेऽभिवाद्याः ॥ ६ ॥

वैद्यैः सतपस्कैर्वैद्याः सतपस्काः **प्रादुर्भूतसिद्धयश्च** ये स्युस्तेऽभिवाद्याः ॥७॥

वैद्यैः सतपस्कैः प्रादुर्भूतसिद्धिभिर्वैद्याः सतपस्काः प्रादुर्भूतसिद्धय **ऐश्वरधर्मवन्तश्च** ये स्युस्तेऽभिवाद्याः ॥ ८ ॥

**अथ दक्षवामोत्तरमार्गिणः परस्परमभिवाद्या इत्येके** ॥ ९ ॥

दक्षवामोत्तरमार्गिणः परस्परमनभिवाद्या **इत्येके** ॥ १० ॥

**मार्गे पूर्वस्मादुत्तरो ज्याय इति स्मशाननिलयः** ॥ ११ ॥

क्षत्रवर्णैर्युद्धेष्वपलायिनो युद्धेषु त्यक्तजीविताः **क्षत्रा** ये स्युस्तेऽभिवाद्याः ॥१२॥

गुणसहस्रैर्युक्ताश्चापि युद्धेषु पलायिनो मरणभीरवस्त**स्त्वनभिवाद्याः** क्षत्रैः क्षत्राः ॥ १३ ॥

**वैश्यैर्वै**श्या धनज्येष्ठा ये स्युस्तेऽभिवाद्याः ॥ १४ ॥

गुणसहस्रैर्युक्ताश्चापि यदि निर्धनिनः स्युस्त**स्त्वनभिवाद्या** वैश्यैर्वैश्याः ॥१५॥

**वयोज्येष्ठाः शूद्राः शूद्रैरभिवाद्याः** ॥ १६ ॥

**गुणसहस्रैर्युक्ताश्चापि यदि वयोन्यूनास्तस्त्वनभिवाद्याः शूद्रैः शूद्राः** ॥ १७ ॥

**स्त्रीष्वप्येवम्** ॥ १८ ॥

**यौनज्येष्ठत्वं त्रिधा** ॥ १९ ॥

**वर्णज्येष्ठत्वं वयोज्येष्ठत्वं** मातुलत्वादि**सम्बन्धज्येष्ठत्वं** च ॥ २० ॥

**सर्वैरेव यौनज्येष्ठत्व**मनुसन्धायाभिवाद्यानभिवादयेयुः सर्वे ॥ २१ ॥

यौनज्येष्ठत्वं योऽननुसन्धायाभिवादयति स आत्मानं हिनस्ति तस्माद्यौनज्येष्ठमेवाभिवादयेत् ॥ २२ ॥

वयोज्येष्ठत्वं परिहृत्य शूद्रभिन्ना अभिवादयेयुः ॥ २३ ॥

सम्बन्धज्येष्ठत्वं द्विजैर्नानुसन्धेयमभिवादने **इति केचित्** ॥ २४ ॥

मन्त्रब्राह्मणे **श्रुतिः** ॥ २५ ॥

**श्रुतिस्मृतिपुराणानि तन्त्रं च चतस्रो विद्याः** ॥ २६ ॥

विद्यासु पूर्वा पूर्वा ज्यायसी ॥ २७ ॥

तस्मात्परया युक्तात्पूर्वया युक्तो **ज्येष्ठः** ॥ २८ ॥

विद्यातपसोस्**तपो भूयः** ॥ २९ ॥

तस्माद्विद्यायुक्तात्तपोयुक्तो **ज्येष्ठः** ॥ ३० ॥

वर्णकनिष्ठ सम्बन्धकनिष्ठ कथचिन्नाभिवादयेत् ॥ ३१ ॥

यदि स तथा स्यात्त सम्बन्धकनिष्ठमप्यभि**वादयेदित्येके** ॥ ३२ ॥

सवर्णाना साश्रमाणा च परस्परमभिवादनमिति कश्चित् ॥ ३३ ॥

यद्युभयो सर्वत समत्वे परस्परमालिङ्गनम् ॥ ३४ ॥

सर्वेऽभिवादका सर्वैराशिषा योज्या ॥ ३५ ॥

पुरस्ताद्दीक्षिता वर्णाश्रमाभ्या कनिष्ठा अपि पश्चाद्दीक्षितैर्वर्णाश्रमज्येष्ठैरभिवाद्या इति **ब्रह्मा** ॥ ३६ ॥

ऐश्वराणा पुसा परस्परमभिवादन**मित्येके** ॥ ३७ ॥

ऐश्वराणां पुसा परस्परमालिङ्गनमिति **विष्णुः** ॥ ३८ ॥

ऐश्वरा अभिवादनालिङ्गनाशीर्वादा यथेच्छ **कुर्युरित्युन्मत्तभैरवः** ॥ ३९ ॥

स्ववर्णं स्वप्रवरान्स्वगोत्र स्ववेद स्वसस्कारसूत्र स्वाश्रम स्वनाम स्वेनाधीता विद्या सुकृतान् यज्ञान् समुच्चार्याह तस्याभिवाद्यस्य सवुच्यन्त नाम गृही वाऽभिवादय इत्युच्चैरुद्धृष्य पादाङ्गुलीभिर्जानुभ्या हस्ताभ्या भालेन धरणीं स्पृशेदेषोऽ**भिवादनक्रमः** ॥४०॥

स्वविद्या स्वतपो नोच्चरेदिति **सूर्यः** ॥ ४१ ॥

**क्षत्रः** स्ववर्णं स्वपुरोहितप्रवरगोत्रसस्कारसूत्रवेदान्समुच्चार्य स्वाश्रम स्वनाम स्वेनाधीता विद्या रणेषु शात्रवैर्दत्तान् खड्गप्रहारान्स्वपरामृष्टान् रणाङ्गणेषु स्वसम्पादितविजयाश्च समुच्चार्य तथैवोद्धुष्याभिवादयेत् ॥ ४२ ॥

**वैश्यः** स्ववर्णं स्वपुरोहितगोत्रप्रवरसस्कारसूत्रवेदान्समुच्चार्य स्वाश्रम स्वनाम स्वेनाधीता विद्या स्वपोष्याणा मनुष्याणा सङ्ख्या स्वपोष्याणां पशूनां प्रतिवर्षलाभसङ्ख्या च समुच्चार्य तथैवोद्धुष्याभिवादयेत् ॥ ४३ ॥

**शूद्रः** स्ववर्णं स्वाश्रम स्ववय सख्या नाम स्वस्वामिवर्णं च समुच्चार्य तथैवोद्धुष्याभिवादयेत् ॥ ४४ ॥

अभिवाद्यानामाशिषा योज्या अभिवादका ॥ ४५ ॥

**ब्राह्मणो** ब्राह्मणेनैव ब्रह्मचारिगृहस्थवानप्रस्थसन्यासाश्रमाधिकारिणायुष्मानाशिष्टो दृढिष्ठो बलिष्ठो विद्यातपोभ्यामेधीत्युच्चैरुद्धुष्य वरमुद्रयाशिषा योज्य ॥ ४६ ॥

एव ब्रह्मचारिगृहस्थवानप्रस्थाश्रमाधिकारिणायुष्मानाशिष्टो दृढिष्ठो बलिष्ठो विद्यातपोभ्यामेधीत्युच्चैरुद्धुष्य वरमुद्रयाशिषा योज्य ॥ ४७ ॥

एव ब्रह्मचारिगृहस्थवानप्रस्थाश्रमाधिकारिणायुष्मानाशिष्टो दृढिष्ठो बलिष्ठो विद्याशौर्याभ्यामेधीत्युच्चैरुद्धुष्य वरमुद्रया **क्षत्र** आशिषा योज्य ॥ ४८ ॥

एव ब्रह्मचारिगृहस्थाश्रमाधिकारिणायुष्मानाशिष्टो दृढिष्ठो बलिष्ठो विद्याधनाभ्यामेधीत्युच्चैरुद्धुष्य वरमुद्रया **वैश्य** आशिषा योज्य ॥ ४९ ॥

एवं गृहस्थाश्रमाधिकारिन्नायुष्मान्बलारोग्याभ्यामेधीत्युच्चैरुद्धृत्य वरमुद्रया **शूद्र** आशिषा योज्य ॥ ५० ॥

वेदानधिकाराच्छूद्रस्य ब्रह्मचारिणो वेदाश्रितत्वात्तदभावादस्य तदभाव ॥ ५१ ॥

अयमभिवादनाशिषोर्विधिरदृष्टपूर्वे, दृष्टपूर्वे तु ब्राह्मण शर्मान्त स्वनाम गृहीत्वा तस्याभिवाद्यस्य सम्बुध्यन्त नाम गृहीत्वाऽभिवादय इत्यभिवादयेत्सोऽभिवाद्यो भो आयुष्मन्नेधीत्याशिषा योजयेत्सर्वान्वर्णिनो वर्मान्त क्षत्र पालितान्त वैश्यो दासान्त शूद्र **इत्येके** ॥ ५२ ॥

यद्युभौ सर्वत समौ स्याता तदा परस्परमालिङ्गन कुर्याताम् ॥ ५३ ॥

हृदय हृदये ग्रीवाया ग्रीवा सम्बन्ध्य कराभ्यां पृष्ठ धारयेद्विरेव स एष **आलिङ्गनक्रमः** ॥ ५४ ॥

सौहार्देन त्वा समनज्मीत्युच्चैरुद्धृत्यालिङ्गयेत्समम् ॥ ५५ ॥

**तूष्णीमिति केचित्** ॥ ५६ ॥

स्त्री ज्येष्ठाभिवाद्या कनिष्ठा**शिषा** योज्या यदि समा स्यात्पुसा तर्ह्याशिषैव योज्या पुसा ॥ ५७ ॥

पुमानुत्तुङ्गाङ्गाधिक स्त्रीभ्यस्तस्मात्पुमान् ज्यायान्स्त्रीभ्य पुरुषो भोक्ता स्त्रियो भोग्या भोग्याद्भोक्तुर्महत्त्वादाशिषा योज्या स्त्रिय समा ॥ ५८ ॥

**स्त्रीणां यौनज्येष्ठत्वमेवाभिवाद्यत्वे हेतुभूतं** नान्ये गुणा अभिवाद्यत्वे हेतव ॥ ५९ ॥

**अथाद्यताभिवादकस्य** यथा स्यात्तथाऽभिवाद्यस्तस्मिन्वर्तेत ॥ ६० ॥

दक्षिणवामोत्तरेष्वेक स्वाचार स्वदेवतासम्बन्ध स्वमत स्वनामाचारक्रमेण यत्स्यात्तत्समुच्चार्य दीक्षितस्तथैवाभिवादयेत् ॥ ६१ ॥

योनज्येष्ठत्वमभिसन्धाया**भिवादयेदिति केचित्** ॥ ६२ ॥

सत्स्वपरिष्व सत्स्वपरिष्वक्रमेणाभिवादयेद्दीक्षित दीक्षाक्रमेणाभिवादयेत् ॥ ६३ ॥

तथैवालिङ्गनाशिषा योजने ॥ ६४ ॥

मातृपितृगुर्वीश्वराणा समागमे क्र प्रणमेत् ॥ ६५ ॥

मातृपितृगुर्वीश्वरेषूत्तरोत्तरो ज्यायास्तस्मा मातृपितृसमयोगे पितरमभिवादयेत्पितृगुरुसमयोगे गुरु गुरुदेवतासमयोगे देवता तदनुज्ञात पूर्वं पूर्वं प्रणमे**दिति केचित्** ॥ ६६ ॥

गुरुगुर्वर्ध्यसमयोगे गुरुर्ध्यादनुज्ञातो गुरुमिति **कालभैरवः** ॥ ६७ ॥

तत्समयोगे गुरु गुर्वनुज्ञातो गुर्वर्ध्यमित्यु**न्मत्तभैरवः** ॥ ६८ ॥

अभिवादनक्रमेणाभिवादकस्यार्हतां यथा यथा जानीयात् तथा तथाभिवादनीयोऽभिवादकेन भाषेत वर्तेत पूजयीत ॥ ६९ ॥

गुरुं देवतां वा प्रणम्य तत्पदारविन्दार्पितदृष्टिस्तिष्ठेत्तदनुष्ठानस्तदनुब्रूयात्तदनुज्ञात आसीत तदनुज्ञातः स्वच्छन्दं हसेद्वदेत्पश्येद्विहरेत् ॥ ७० ॥

तदुच्छिष्टान्भोगान्भुञ्जीत ॥ ७१ ॥

तदुच्छिष्टं परकीयां सामान्यां या न भुञ्जीतेति **कालभैरवः** ॥ ७२ ॥

तदनुमतो भुञ्जीतेत्याकाशभैरवः ॥ ७३ ॥

प्रासादस्थो वा विहितचिह्नितो वा नाभिवादयेत् ॥ ७४ ॥

स्वे शाखाग्रे गुरुमन्यांश्चाभिवाद्यान्नाभिवादयेत् ॥ ७५ ॥

अस्वेशाग्रे गुरुं प्रणमेदिति **कश्चित्** ॥ ७६ ॥

स यदि तत्र प्रणमेद्गुरुस्तं ताडयेच्छिष्य यद्गुरुस्ताडयति **तदस्य प्रायश्चित्तम्** ॥ ७७ ॥

यदि गुरुर्न ताडयेत्तदा तदीशमन्त्रेण तत्तदीशगायत्र्या वा तत्तदीशं क्षमापयंस्तन्मूर्धनि षट् पुष्पाञ्जलीन् प्रयच्छेदेषा वा **प्रायश्चित्तिः** ॥ ७८ ॥

यद्वा देवतां पठचन्तर्हिता मनसा ध्यायन् गुरुं प्रणमेदिति **दिग्भैरवः** ॥७९॥

धृतदेवतार्चनसाधनो नाभिवादयेत् ॥ ८० ॥

वाक्यान्तेनाभिवादयेदिति **गार्हपत्योऽग्निः** ॥ ८१ ॥

असमाहितं न प्रणमेत् ॥ ८२ ॥

असमाहितो न प्रणमेत् ॥ ८३ ॥

मात्रादीनामपरोक्षे गुरुं सदैवतां सतीर्थ्यांश्च प्रणम्य मातरं पितरमेवं प्रणमेत् ॥८४॥

केवलं सांस्कारिकं ऐश्वरदीक्षितो नाभिवादयेद्यदीच्छेत्तं प्रणन्तुं सांस्कारिकक्रमेण तस्याभिवाद्यत्वं निचिन्त्य सांस्कारिकक्रमेणाभिवादयेन्न दीक्षाक्रमेणेति **दक्षिणाग्निः** ॥ ८५ ॥

इति पारानन्दसूत्रे सप्तममाह्निकम् ॥ ७ ॥

पूर्वाध्यायः समाप्तः ॥

**ॐ अथार्चनक्रमं वक्ष्यामः ॥ ८६ ॥**

भक्त एवं सदा ध्यायेदेकविंशतिवार्षिकम् ॥ गजवक्रं चतुर्बाहुं मनुष्यवपुषं ध्रुवम् ॥ पुष्टिशक्तियुतं रक्तं रक्तवाससमीश्वरम् ॥ हस्ताभ्यां दक्षिणाभ्यां तु परशुं लड्डुकं तथा ॥ वामाभ्यां कमलं पाशं दधानं मूषवाहनम् ॥ नानालङ्कारसंयुक्तं रक्तचन्दनचर्चितमिति **ध्यानं दन्तिनः** ॥ ८७ ॥

दक्षोर्ध्वाधरयोर्वामोर्ध्वाधरयोः क्रमेणायुधानि शक्ति वामतः सर्वत्र ॥ ८८ ॥

षट्पञ्चवार्षिकं श्वेतं ध्यायेद्भक्तः सदाशिवम् ॥ एकवक्रं चतुर्बाहुं त्र्यक्षं वै मानुषं ध्रुवम् ॥ गौर्या शक्त्या युतं नग्नं श्वेताम्बरमथापि वा ॥ हस्ताभ्यां दक्षिणाभ्यां तु परशुं च त्रिकण्टकम् ( त्रिशूलं परशुं तथेत्याहवनीयाग्निः ) ॥ वामाभ्यां डमरुं पद्मं दधानं वृषवाहनम् ॥ नानालङ्कारसंयुक्तं श्वेतचन्दनचर्चितमिति **ध्यानं शिवस्य** ॥ ८९ ॥

षट्चतुर्वार्षिकं विष्णुं ध्यायेद्भक्तः सदा हरिम् ॥ श्यामदेहं चतुर्बाहुं मनुष्यवपुषं ध्रुवम् ॥ लक्ष्म्या शक्त्या युतं स्तुत्यं पीतवाससमीश्वरम् ॥ कराभ्यां दक्षिणाभ्यां तु चक्रं कौमोदकीं गदाम् ॥ वामाभ्यां कमलं शङ्खं पन्नगाशनवाहनम् । नानालङ्कारसंयुक्तं पीतचन्दनचर्चितमिति **ध्यानं विष्णोः** ॥ ९० ॥

नववर्षयुतां ध्यायेत्सदा भक्तस्तु कौशिकीम् ॥ सुतप्तहेमदेहां तां मनुष्याकृतिविग्रहाम् ॥ शक्त्या चण्डिकया युक्तां रक्तवस्त्रां चतुर्भुजाम् ॥ हस्ताभ्यां दक्षिणाभ्यां तु कृपाणं च त्रिकण्टकम् ॥ वामाभ्यां कमलं घण्टां दधानां सिंहवाहनाम् ॥ नानालङ्कारसंयुक्तां कुङ्कुमागरुचर्चितामिति **ध्यानं शक्तेः** ॥ ९१ ॥

भक्त एवं सदा सूर्यं ध्यायेद्द्वादशवार्षिकम् ॥ तेजोदेहं युगभुजं मनुष्यवपुषं ध्रुवम् ॥ संज्ञाशक्त्या युतं दिव्यं रक्तवाससमीश्वरम् ॥ चक्रं हस्तेन दक्षेण वामेन जलजं शुभम् ॥ सप्ताश्वरथसंस्थं तं मुनिभिः सर्वदा नुतम् ॥ नानालङ्कारसंयुक्तं रक्तचन्दनचर्चितमिति **ध्यानं सूर्यस्य** ॥ ९२ ॥

सजलजलदश्यामां दशवार्षिकीं खड्गमुण्डाभयवरकरां चतुर्भुजां नागभूषणां वा सिन्दूरलिप्तां रक्तचन्दनलिप्तां वा व्याघ्रचर्माम्बरां हस्तिचर्माम्बरां दिगम्बरां वा शवकरकृतमेखलां वा सिंहस्थां शवासनां वा कुटिलचिकुरशोभितशिरसं आसवामोदानन्दितां मुद्राभक्षणलालसां कृशां तर्पयन्तीं भक्तजनविहारदर्शनहर्षोत्फुल्लहृदयां सततलीलाविहारिणीं समरप्रियां रणमण्डलरुधिरास्वादपरां कुरुकुल्लाशक्तियुतां मनुष्यविग्रहां कालिकां ध्यायेद्भक्त इति **ध्यानं कालिकायाः** ॥ ९३ ॥

**ताराद्या** महाविद्याः सिद्धयाथ ॥ ९४ ॥

महाविद्यानां वृषादृषभानवराणि **वाहनानीच्छन्ति** ॥ ९५ ॥

पादाङ्गुष्ठसदृशस्थूलस्त्रिवितस्तिर्दण्डस्तदधः पडङ्गुलः त्सरुर्दण्डोर्ध्वतश्चतुरङ्गुल आकाशाकारस्तत्परितोऽर्धचन्द्राकार एतदाकारः **परशुः** ॥ ९६ ॥

**त्सरु**रायुधमुष्टिः ॥ ९७ ॥

सर्वत्र त्सरुः षडङ्गुलः ॥ ९८ ॥

उक्तलक्षणो दण्डत्सरुस्तस्मिन्कराङ्गुष्ठस्थूला नीचैर्दीर्धिकोच्चैस्तया एतदाकारो**ऽङ्कुशः** ॥ ९९ ॥

**नागः पाशः** ॥ १०० ॥ ९०० ॥

**कमलदण्डो** द्विवितस्तिः ॥ १ ॥

तदीयेन मानेनोत्थितो **मूषकः** सप्तवितस्तिरुच्छ्रित आयतस्तदनु वितस्तिः ॥ २ ॥

**विघ्नेशः** स्ववितस्त्योत्थितः सप्तवितस्तिरुच्छ्रितस्तदनुकूलो यथायथमायतः ॥ ३ ॥

तत्पारिषदास्तद्वन्मनुष्याकृतयस्तदनुस्रगनुलेपनायुधास्तदनुरूपा इति **दिग्भैरव** ॥ ४ ॥

सर्वे एवेश्वराः सप्तवितस्त्युच्छ्रितास्तदनुकूलतो यथायथमायताः ॥ ५ ॥

तत्पारिषदास्तद्वन्मनुष्याकृतयस्तदनुस्रगनुलेपनाः ॥ ६ ॥

सर्वे एवेश्वरास्तत्तल्लोके निरायुधा निर्वाहना द्विभुजाः परत इति **कालभैरवः** ॥ ७ ॥

सर्वेषां पद्माभयकरास्तदनुरूपास्तद्वयोवारिण्यस्तद्वाहनास्तदनुलेपनवस्त्राः **शक्तयः**॥८॥

विघ्नेशो यदेकविंशतिवार्षिकस्तस्मादस्य सर्वमेकविंशसंख्यं भवति ॥ ९ ॥

स्नानं तर्पणं अक्षता. पुष्पं धूपो दीपो नैवेद्यः फलं ताम्बूलमारार्तिकं सहस्रदीपारार्तिकं कर्पूरारार्तिकं वेश्यानाद्यं प्रदक्षिणा पुष्पाञ्जलिरभिवादनमपराधक्षमापनं होमः पुष्पं स्तवः पशुस्तत्तदीश्वरवयः संवत्सरसंख्याकं विशेषार्चनं इदं नित्यार्चने तर्पणं पुष्पं भवति इति **कालभैरवः** ॥ १० ॥

पादाङ्गुष्ठसदृशस्थूलः अष्टवितस्तिर्दण्डस्तदूर्ध्वमनामिकासदृशस्थूला द्वादशाङ्गुलास्तीक्ष्णाग्रास्त्रयः शूला यस्मिन्नेतदाकार**स्त्रिशूलस्तत्पुरुषस्य** ॥ ११ ॥

उभयोर्भागयोः प्रसृतवर्तुलमुखः सङ्कुचितमध्यस्तन्मुखयोः पिनद्धाजिनः सम्बन्धशर्वराप्ररज्जुः करव्यापारभ्रामितो रज्ज्वग्रेण मुखयोस्ताड्यमानः शब्दकृदेतदाकारो **डमरुर्महादेवस्य** ॥ १२ ॥

मध्यतो वितस्तिमात्रं परितो वर्तुलं परितः शितधारं बहिस्तो मध्यतः साकारां अन्तस्त आधारमेतदाकारं **चक्रं नारायणस्य** ॥ १३ ॥

उक्तपरशुदण्डोर्ध्वषडङ्गुलो वर्तुलः पिण्डस्तस्मिन्पिण्डे मध्यमामध्यपर्वायताः शित-धाराश्चतस्रो रेखास्ततोऽङ्गुष्ठपर्वमात्राणिरेतदाकारा **गदा वासुदेवस्य** ॥ १४ ॥

अञ्जलिमितायतो वितस्तिमात्रो दीर्घः **शङ्खो विष्णोः** ॥ १५ ॥

**कुरुकुल्ला**शक्तिः खड्गाभयकरा **चण्डिकाश**क्तिश्च ॥ १६ ॥

त्रिवितस्तिदीर्घो द्विवितस्तिदीर्घो वोपकनिष्ठिकामध्यातर्जनीभिरूर्ध्वाग्राभिरायतोऽच्छि-न्नाग्रविल्वमध्यदलो द्विधारो मध्यत एकरेपो रेपात उभयतो नीचप्रवण उभयतस्तीक्ष्णधारः१७

षडङ्गुलत्सरुक एतदाकारः **खड्गः** ॥ १८ ॥

एकवितस्तिदीर्घा अञ्जलिमितायता नीचैर्वर्तुला उच्चैरेकदण्डा अन्तस्सलोलदण्डा कर-व्यापारेण नादकरी एतदाकारा **घण्टा** ॥ १९ ॥

**काद्या महाविद्याः सर्वा** दशवार्षिक्यः ॥ २० ॥

तद्वयःसंवत्सरास्तासां शक्तयस्तद्वर्णाश्च ॥ २१ ॥

महाविद्याः पृथक् पृथक् एतासां सजातीयत्वाच्छक्तावेव गणनं तासां लोकाश्च **भिन्ना इत्येके** ॥ २२ ॥

ईश्वरादीनां दिक्परिच्छिन्नत्वेऽपि आकाशपरिच्छिन्नत्वेऽपि कथमनाद्यनन्तत्वं कथं सर्व-ज्ञत्व**मिति वादिन आगमविरुद्धबुद्धयः** पण्डितंमन्याः ॥ २३ ॥

कथं देवताधिष्ठानेनार्चितेन देवतार्चिता भवति कथं सुकृतेन कर्मणा स्वर्गं लोकं जयति कथं साद्यनन्तदिव्यवपुरुदेति कथमेतेद्देवताधिष्ठानमिति **कुतर्कबला अश्रद्द-धाना आगमविरुद्धबुद्धय एतेषां महती विनष्टिः** ॥ २४ ॥

कथमेकस्य बहवोऽधिष्ठातार **इति पृष्टा वक्ष्यामः** ॥ २५ ॥

जनपदग्रामगृहवत् ॥ २६ ॥

गृहान्तरगतस्य स्वत्वस्य जनपदाधिष्ठातृ-ग्रामाधिष्ठातृ-गृहाधिष्ठातारो यथा ॥ २७ ॥

आगमविरुद्धबुद्धीनां सुवचांसि श्राव्याण्यनुपादेयानि कीरवत् ॥ २८ ॥

ईश्वराणामनाद्यनन्तदेहानां द्वितीयदेहसंग्रहोऽवतरणेषु कवचाङ्गुलित्रादिवत् ॥२९॥

ईश्वरस्य नित्यदेहस्याव्यक्तत्वमचिन्त्यैश्वर्यत्वात् ॥ ३० ॥

पल्लवरागताम्रं द्विभुजं चतुर्मुखं दक्षिणेऽक्षमालां वामे कमण्डलुं दधानं सप्तवार्षिकं पल्लवरागताम्रवस्त्रं हंसविमानस्थं पल्लवरागताम्रगन्धचर्चितं सरस्वतीयुतं मनुजाकृतिं ध्यायेद्ब्रह्म **इति ध्यानं ब्रह्मणः** ॥ ३१ ॥

**सरस्वती**शक्तिः सप्तवार्षिकी श्वेताम्बरा श्वेतस्रगनुलेपना हंसविमानवाहना ॥३२॥

**दक्षाचारसेव्यत्वं ब्रह्मणः** ॥ ३३ ॥

**विघ्नेशादिवदिति नारायणः** ॥ ३४ ॥

**काद्यानां विद्यानां वामाचारसेव्यत्वमिति तत्पुरुषः** ॥ ३५ ॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानैर्युक्तो **ध्यानयोगः** ॥ ३६ ॥

तान्स्फुटीकरोति ॥ ३७ ॥

अहिंसासत्यास्तेयब्रह्मचर्यायाचनानि **यमाः** ॥ ३८ ॥

शौचसंतोषतपःस्वाध्याया **नियमाः** ॥ ३९ ॥

स्थिरसुख**मासनम्** ॥ ४० ॥

श्वासप्रश्वासयोर्गतिविच्छेदः **प्राणायामः** ॥ ४१ ॥

इन्द्रियाणां विषयसान्निध्येऽपि मनसा तदपरिग्रहः **प्रत्याहारः** ॥ ४२ ॥

देशबन्धश्चित्तस्य **धारणा** ॥ ४३ ॥

तस्मिन्मनःस्थिरीकरणं **ध्यानम्** ॥ ४४ ॥

सत्कारशास्त्रोक्तं नित्याद्यनुष्ठानमधिकारिणा हिंसामुत्सृज्य तदनुक्तं **कर्मयोगः** ४५

**श्रुतितन्त्रस्मृतिपुराणानां** तदनुसम्पादितं ज्ञानमधिकारिणा **ज्ञानयोगः** ४६

यमतपःस्वाध्यायध्यानभक्तयो **भक्तियोगः** ॥ ४७ ॥

अहिंसास्तेयायाचनानृता **नियमाः** ॥ ४८ ॥

प्राणदेहयोः सर्वतः पृथक्करणं **हिंसा** ॥ ४९ ॥

यस्मात्प्राणिनो यच्छिन्नं तद्भूय नोद्भवति तच्छेदनं **हिंसा** ॥ ५० ॥

तदनुज्ञातत्वदीयस्य वस्तुनः संग्रहः **स्तेयमित्येके** ॥ ५१ ॥

ऋते देवतानित्यार्चनार्थं वस्तुनः परानुज्ञातः परकीयस्य वस्तुनः संग्रहश्**चौर्य-मिति केचित्** ॥ ५२ ॥

जीवानां सुखविघातको वाग्व्यापारोऽ**नृतम्** ॥ ५३ ॥

मिथ्याभाषणमनृ**तमित्येके** ॥ ५४ ॥

शिष्टं स्पष्टम् ॥ ५५ ॥

सूर्योदयात्पुनः सूर्योदयो यावत्तावन्मध्ये देवनिर्माल्यानुन्येष्वन्यतमायैकस्मै याचनम-**याचनमित्येके** ॥ ५६ ॥

निर्माल्यानुन्याम्यामन्यस्मै याचनमया**चनमित्युन्मत्तभैरवः** ॥ ५७ ॥

विहितानुष्ठानं **तपः** ॥ ५८ ॥

सन्ध्यासनं **तप इति केचित्** ॥ ५९ ॥

अनशनं **तप इति कालभैरवः** ॥ ६० ॥

दीर्घनिरशनं **तप इत्याकाशभैरवः** ॥ ६१ ॥

शोधकर्मैकग्रस्थानान्तरधारणयाराम्रद्धोऽत्र **स्वाध्यायः** ॥ ६२ ॥

एवंविधपवनाभ्यसनं **स्वाध्यायो वेति दिग्भैरवः** ॥ ६३ ॥

नान्यस्त्राता त्वदृते मदीय **इतीश्वरचिन्तनं ध्यानम्** ॥ ६४ ॥

कदाहं तं पश्य इतीश्वरचिन्तनं ध्यानमित्य**ाकाशभैरवः** ॥ ६५ ॥

स सेव्यः सेवकोऽहं स आराध्योऽहमाराधको न ततोऽन्यो मदिष्टकृदितीश्वरचिन्तनं ध्यानमिति **कालभैरवः** ॥ ६६ ॥

अनुरक्तिर्**भक्तिः** ॥ ६७ ॥

अस्मिन्भक्तियोगे त्रय आचारास्ते पूर्वं व्याख्याताः ॥ ६८ ॥

अहिंसाधर्मैकनिश्चयः स्वाध्यायनिरतश्चतुर्णामेकस्यैवैकाङ्गसेवकोऽपीश्वरतोपकृदि**त्युन्मत्तभैरवः** ॥ ६९ ॥

चिरकालैनैरन्तर्यसत्काराभ्यासैरेकस्यैवैकाङ्गसेवको हिंसापूर्वकोऽपीश्वरतोपकृदि**त्येके** ॥ ७० ॥

सूर्योदयात्पुनःसूर्योदयो यावत्तावन्निलश एकाङ्गमेकस्याहिंसासेवनपूर्वकं यः सेवते नियतः स तां परां भक्तिमाप्नोति **इति दिग्भैरवोन्मत्तभैरवौ** ॥ ७१ ॥

ये हिंसामाश्रित्य ऐश्वरान्धर्मान्वयं कुर्म **इति ध्यायन्तः कुर्वन्ति** न ते तानाप्नुवन्ति नैश्वरान्लोकान् समभिपद्यन्ते **पतनधर्माणः** ॥ ७२ ॥

हिंसाऽऽयुर्नाशकरी हिंसा पुण्यौघनाशन**ीति** ॥ ७३ ॥

हिंसामाश्रित्य यः कुर्यात्सुकृतौघान्सहस्रशः ।
सुखमस्मै प्रदातुं ते न समर्थाः कथंचन ॥
रोगानाश्रित्य यक्ष्मादीन्नैवेच्छेत्सुखसाधकान् ।
उपचारान्यथा मन्दो न ते स्युः सुखदायिन **इति** ॥ ७४ ॥

विषयुक्तं यथा तोयं न तृष्णां वारयेत्कचित् ।
हिंसायुक्तं तथा पुण्यं न सुखं दातुमर्ह**तीति** ॥ ७५ ॥

विहिताऽविहिता वापि हिंसा याऽनपराधिनाम् ।
सर्वथा दुःखदा पश्चात्तस्मात्तां परिवर्जये**दिति** ॥ ७६ ॥

एकामहिंसामाश्रित्य यः कुर्यादघपर्वतान् ।
सोऽघाचलाञ्छुचीन्सर्वान्कुरुतेऽहिंसया नरः ॥
स्वात्मवत्कुरुते सर्वान्यथाग्निर्दारुपर्वता**निति** ॥ ७७ ॥

नराण्यहिंसितस्यैवं ये देहस्य नराः क्वचित् ।
छेदनं वा विशसनं क्रयं वा विक्रयं तथा ॥
उपकारं च संस्कारं भोगच्छेदानुसंमतिम् ।
कुर्युस्त्ववयवानां वै तेऽप्यहिंसाविशारदा **इति** ॥ ७८ ॥

मनुष्यहिंसितानां प्राणिनामनागसां देहानामसक्तार्द्रवपूर्वाणामग्रयशानां यच्छेदनं विशसनं क्रयो विक्रयः संस्कारो भोग एतेषां कर्मणामन्यतमस्य कर्मण उपकारोऽनुमननं वा एतेष्वन्यतमं वा कुर्यात्सोऽपि हिंसावद्दुःखभागिति ॥ ७९ ॥

विशसनं क्रयो विक्रय उपकारः संस्कारो भोगोऽनुमननम् ।
हिंसाः सप्तविधा गौण्यः समास्त्वेता विहिंसया ।
तस्मादष्टविधां हिंसा वर्जयेदीशतोपच्छदिति ॥ ८० ॥

साक्षादीक्षितश्चतुर्ष्वपि योगेष्वधिकृतो भवति ॥ ८१ ॥

कर्मयोग–ज्ञानयोग–ध्यानयोगेषु पारानन्देषु पारानन्दीभावनामयी **दीक्षेत्येके** ॥ ८२ ॥

चतुर्भिश्चतुर्ष्वन्यतमेन वा हिंसा सेवनपूर्वकेण सेवितेनैकाङ्गेन परा भक्तिरुदेति तया साधनन्तरपुःप्राप्तिरित्येके ॥ ८३ ॥

**अर्चको द्विधा** ॥ ८४ ॥

उत्तमो मध्यमः ॥ ८५ ॥

जडईशप्रतीके य आस्तिकः शास्त्रज्ञातविधिरत्यन्तमनुरक्तिं कुरुतेऽर्चनं विधत्तेऽत्यन्तं स **उत्तमः** ॥ ८६ ॥

पीठयन्त्रस्थण्डिलप्रस्तुतिशुद्धोदकाग्निवायुदिगाकाशप्रतीकेषु तत्तदीश्वराद्युधाकारेषु सौवर्णेषु राजतेषु ताम्रेषु लौहेषु वैतेष्वन्यतमेऽर्चयेदीशम् ॥ ८७ ॥

पारानन्द एभ्योऽन्यत्र सम्पूजयन्नीशं पारानन्दात्पतत्येव ॥ ८८ ॥

तस्मान्नान्यत्रेशं पूजयेत्**पारानन्दः** ॥ ८९ ॥

*न भूतशुद्धिर्न च न्यासजालं न हिंसनं जङ्गमस्थावराणाम् ।*
नैवार्चनं दैवतदेवताना चरेषु वा प्राणभृता वपु:षु ॥

पारानन्दानामित्यनुशासनान्न सद्धपमे न गुरौ नार्हे प्राणिनीशमर्चयेन्न सूर्यमण्डलेऽप्यमीशमर्चयेत्**पारानन्दः** ॥ ९० ॥

प्रवहज्जलमेव शुद्धोदकमित्येके ॥ ९१ ॥

**अर्चनं त्रिविधम्** ॥ ९२ ॥

अर्हणार्चनं दानार्चनं प्रयोगविनियोगार्चनम् ॥ ९३ ॥

देवतामावाह्यासनं तस्यै दत्त्वा नमस्कारं ध्यानमपराधक्षमापनं दासोऽस्मीति निवेदनं गुरुतनिवेदनं साक्षात्कारणवचनं कुर्याद्विरर्जयेच्च तामित्यर्हणार्चनम् ॥ ९४ ॥

अत्र पुष्पाञ्जलिनिक्षेप इति केचित् ॥ ९५ ॥

देवतामावाह्यासनं तस्यै दत्त्वा प्रकल्पनीयान्प्रकल्प्यैकस्मिन्महति पात्रे सर्वानुपचारान्स्थाप्य तत्पात्रं तस्यै दद्यान्नोत्रैः स्तुत्वा प्रदक्षिणां पुष्पाञ्जलिं दत्त्वा ध्याने गतःस्थिरी-

समुत्तीर्यान्यवासः परिधायाचामेत् ॥ १६ ॥

कौपीनं कटिसूत्रं च महती शुक्लवाससी ।

कुण्डले चाङ्गुलीयं च गृहस्थस्य विधीयते ॥

शूद्रवर्जमिति केचित् ॥ १७ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यतिः ।

कौपीनकटिसूत्राभ्यां हीनाः शूद्रा न-संशयः ॥

द्वादशाङ्गुलायतं पञ्चवितस्तिदीर्घं कौपीनं तथैव दीर्घं षडङ्गुलायतं कटिसूत्रम् ॥ १८ ॥

शाणं तार्णं कार्पासं क्षौममाजिनं पार्णं वाल्कलं वस्त्राणि धार्याणि यथासंभवम् ॥ १९ ॥

एतान्येव धार्याणि द्विजैरपीत्युन्मत्तभैरवः ॥ २० ॥

श्वेतं ब्राह्मणो रक्तं क्षत्रः पीतं वैश्यः कृष्णं शूद्रो गृहस्थः ॥ २१ ॥

कौपीनकटिसूत्रे तु गृहस्थाश्रमिभिर्द्विजैः ।

धृते चेत्ते बहिष्कार्याः शूद्रवत्तत्र संशय इति ॥

धार्मिकश्चेद्ब्रह्मवेच्छूद्रः कौपीनं धारयेत्तु स इति बृहस्पतिः ॥ २२ ॥

गृही विप्रः कार्पासातिरिक्तं न धारयेत् ॥

धृत्वा स्नात्वा प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यतीति बृहस्पतिः ॥ २३ ॥

शाक्तसौरवाक्रतुण्डाश्चेद्गृहस्था रक्तं शैवस्तथैव चेच्छ्वेतं वैष्णवस्तथैव चेत्पीतमिति कश्चित् ॥ २४ ॥

## अथाचमनं वक्ष्यामः ॥ २५ ॥

त्रिः प्राश्यापो द्विरुन्मृज्य हस्तं प्रक्षाल्य मुखं दक्षां नासां वामां नासां दक्षं चक्षुर्वामं चक्षुर्दक्षं श्रोत्रं वामं श्रोत्रं मूर्धानं च स्पृशेदित्याचमनमिति याज्ञवल्क्यः ॥ २६ ॥

स्वेष्टेशादिव्यनामभिः संबुद्ध्यन्तैश्चतुर्थ्यन्तैर्नमोन्तैर्वा पिबेदुन्मृजेत्स्पृशेदित्याचमनमित्युन्मत्तभैरवः ॥ २७ ॥

स्वेष्टेशगायत्र्या सुविग्रह इत्यन्तेनापः प्राश्य धीमहीत्यन्तेनापः प्राश्य प्रचोदयादित्यन्तेनापः प्राश्रीयात्तूष्णीमुन्मृजेत्स्पृशेदेतदाचमनमिति दिग्भैरवः ॥ २८ ॥

वामाचार्येतदाचमनं कुर्यादिति जनार्दनः ॥ २९ ॥

त्रिःप्राश्यापोऽङ्गुष्ठमूलेन विलोममधरमोष्ठं द्विरुन्मृज्य हस्तं प्रक्षाल्य तर्जनीमध्यमानामाभिरूर्ध्वं विलोममोष्ठं द्विरुन्मृज्य हस्तं पुनः प्रक्षाल्याङ्गुष्ठमध्यमाभ्या दक्षनासा वामनासामङ्गुष्ठानामिकाभ्यां दक्षं चक्षुर्वामं चक्षुर्दक्षं श्रोत्रं वामं श्रोत्रं करतलेन हृदयं पञ्चभिरङ्गुलीभिर्मूर्धानं दक्षं बाहुमूलं वामं बाहुमूलं च दक्षहस्तेन स्पृशेदित्याचमनमिति देवानन्दः ॥ ३० ॥

हस्तौ प्रक्षाल्य त्रिःप्राश्यापो द्विरुन्मृज्य सकृदुपस्पृश्य मुखं सव्यं हस्तं पादौ प्रोक्ष्य शिरो नेत्रे कर्णौ हृदयं च स्पृशेदित्याचमनं **ब्राह्मणानाम्** ॥ ३१ ॥

द्विजानां नो इतराणामिति **चतुर्मुखः** ॥ ३२ ॥

एतदाचमनमौत्तर एव कुर्यान्नो इतर **इत्यानन्दः** ॥ ३३ ॥

**यदाचामति तेनात्मानं मेध्यं कुरुते सर्वकर्मस्वर्हं कुरुते** ॥ ३४ ॥

यद्द्विराचामति तेनात्मानं स्नातं कुरुते **स्नानस्यैषोऽनुकल्पः** ॥ ३५ ॥

ऐश्वरेषु दैवेषु च बद्धशिखो यज्ञोपवीती धृतवस्त्रोऽङ्कितोऽर्हो भवति तस्मादैश्वरेषु दैवेषु च कर्मसु सर्वेषु बद्धशिखो यज्ञोपवीती धृतवस्त्रस्या**दौ निषेधात्** ॥ ३६ ॥

**अङ्कनं** व्याख्यातम् ॥ ३७ ॥

**अथ तस्य द्रव्याणि वक्ष्यामः** ॥ ३८ ॥

सिन्दूरेण **गाणपः** ॥ ३९ ॥

रक्तचन्दनेन **शाक्तः** ॥ ४० ॥

तेनैव **सौरः** ॥ ४१ ॥

बिल्वेन **शैवः** ॥ ४२ ॥

हारिद्रेण **वैष्णवः** ॥ ४३ ॥

अक्षारेण रक्तेन **गाणप-शाक्त-सौरा इत्येके** ॥ ४४ ॥

अक्षारेण श्वेतेन **शैव इत्येके** ॥ ४५ ॥

अक्षारेण पीतेन **वैष्णव इत्येके** ॥ ४६ ॥

सर्वेषामेवैश्वराणां शुद्धा मृत्स्ना द्रव्यं तस्मात्सर्वे शुद्धया मृत्तिकयाङ्कनानि वा कुर्युः ॥ ४७ ॥

सन्ध्यामुपास्य स्वेष्टां देवतां परिचरेत् ॥ ४८ ॥

**यदङ्कितो भवति तत्पाप्मानं निरसति** ॥ ४९ ॥

वामी चेत्ताम्रिकीं सन्ध्यां निर्वर्त्य स्वेष्टां परिचरेत् ॥ ५० ॥

**यत्सन्ध्यामुपास्ते तेनार्चने स्वात्मानमधिकृतं कुरुते** ॥ ५१ ॥

यत्प्रथमां सन्ध्यामुपास्ते स्नानं वा तत्ताम्रेऽधिकृतं कुरुते यत्ताम्रिकीं सन्ध्यामुपास्ते द्वितीयां तदर्चनेऽधिकृतं कुरुते तस्माद्वामी स्मार्तं स्नानं ततस्ताम्रमेव सन्ध्यामुपासीत ॥ ५२ ॥

नित्यार्चनेन विधिनार्चयिष्यन् शुचिः शुचौ देशे समे मनोहरे यज्ञोपवीती चाचम्य स्वासनाद्द्विवितस्तिमितं देशमपहाय देवतासिंहासन पुरतः स्वदक्षिणतः पट्कोणे वर्तुले षोडशदले मण्डले प्रोक्षिते देशे चार्चनसम्भारानर्घ्यपात्राण्यासाद्य स्ववामतस्तथैव शुचि कानकं शाङ्खं तैजस मार्त्तिकमब्जं वाऽऽसाद्य संकल्पयेत् ॥ ५३ ॥

नैवेद्यं स्ववामत आसादयेदि**ति केचित्** ॥ ५४ ॥

. द्विवितस्त्युच्छ्रितं देवतासिंहासनं **भवतीत्येके** ॥ ५५ ॥

तस्मिन्' सिंहासने सौवर्णे तैजस मार्त्तिकं तार्णं पार्णं वार्क्षमौपलं वाऽऽसाद्य तस्मिन्स्त्वद्वाह्वनाकारे तण्डुलपुञ्जे मृदुस्पर्शे वाऽजिने देवताप्रतीकमासादयेत् ॥ ५६ ॥

स्नानं प्रथमं ततस्तान्त्रिकस्तान्त्रिकस्नानं कुरुते तस्मात्स्मार्ता सन्ध्या प्रथमां विधत्ते ततो द्वितीया सन्ध्या तान्त्रिकः कुरुते तथार्चनं स्मार्तं विधाय तान्त्रिकं न विदधाति तत्रैवं समाधीयते स्मार्तेन विधिना स्नास्यतः स्नानदैवतानिमित्तानि भवन्ति एवं सन्ध्यायास्तथा नार्चने भिन्नं दैवतं भवति तस्मादर्चनमुभयं न नैत्यं भवति । यदि दाक्षिणस्तान्त्रिकं मार्गं विशति तदैव तद्देवतायाः स्मार्तं नैत्यार्चनमुत्सृजति तस्मान्नार्चनं नैत्यं स्मार्तं विद्ध्याद्द्वितीयः ॥ ५७ ॥

यथयं परानन्दः प्रथमत एवानभ्यर्च्य स्वेष्टां देवतामेकाग्निर्नैतानिकाग्नीन्वा **परिचरे**द्वान्यदैवमार्पमनैत्यं परिचरति तं चाग्नयः शपन्तः क्रुद्धा देवा ऋषयः पारानन्दमेतं मृत्युवशं नयन्ति देवा ऋषयस्त**स्मादेवं नाचरेद्विद्वान्पारानन्दो यथेष्टमन्ये** तं पुरतः पश्चाद्वा तथार्च**यीतेत्येके** ॥ ५८ ॥

स दक्षिणतोऽग्नेः कुण्ड वा स्थण्डिलं वा कुर्यात् ॥ ५९ ॥

सौवर्णानि राजतान्यौपलानि मार्त्तिकानि तार्णानि पार्णानि यज्ञियवार्क्षाणि तैजसानि चार्माण्यब्जानि वा पूजोपकरणानि **पात्राणि** भवन्ति मिश्रितानि वा भवन्ति ॥६०॥

या. पृथक् पृथक् शिला भवन्ति तस्मात्ताः प्राणभृता न वपूंषि पाषाणाः प्राणभृतां न वपूंषि तस्मात्तेष्वर्चये**त्पारानन्दः** ॥ ६१ ॥

'**शालिग्रामः सर्वेषामेवैश्वराणां प्रतीकं** तस्माच्छालिग्रामे सर्वानेवार्चयेत् ॥ ६२ ॥

शाल्य ईश्वरास्तेषां शालीनां ग्रामभूतोऽयं प्रस्तरस्ततस्तस्मात्तेष्वर्चयेत्सर्वान् ॥ ६३ ॥

शाल्यः तुषाः कणाः एवं ये भग्ना अपि च ते उपला देवानां मनुष्याणामृषीणां ग्रामे ग्रामे पूजिता भवन्ति तस्मादेत उपलाः **शालिग्रामाः** ॥ ६४ ॥

शालिनो शीलवतां भक्तियुक्ताना स्वग्रामगदेतेषु रतिर्जायते तस्मादेत उपलाः **शालिग्रामाः** ॥ ६५ ॥

स्थण्डिले प्रकृतिस्थशुद्धोदकेष्वग्निषु वायुषु दिक्ष्वाकाशप्रदेशेष्वन्यतमे यां देवतामावाहयेत्तामेव तत्रार्चयेत् ॥ ६६ ॥

यदि **स्थण्डिले** पूजयति तयोर्देवतापादयोः स्थिरभक्तिमान्संपद्यते ॥ ६७ ॥

**यद्युदके** पूजयति देवतामक्तिरसिक एव संपद्यते ॥ ६८ ॥

**यद्यग्नौ** पूजयति स उज्ज्वलः संपद्यते वपुषाऽऽरोग्येणाऽऽयुषा यशसा दीप्त्या भक्त्या ॥ ६९ ॥

यदि **वायौ** पूजयति भक्तिवल एव देवतायाः संपद्यते ॥ ७०॥

यदि **दिशि** पूजयति अविरतभक्तिर्देवताया भक्तानामुपमेयोऽनुपमानरूपं निर्देश्यः संपद्यते ॥ ७१ ॥

**यद्याकाशे**ऽर्चयति सिद्धसाधनं तद्वपुरचिरात्संपद्यते ॥ ७२ ॥

स्वेष्टार्चने स्वेष्टेश्वरप्रसादसिद्धये स्वेष्टेशं नित्यार्चनेनार्चयिष्य एवं भावयेत् ॥ ७३ ॥

अन्यार्चने स्वेष्टेश्वरेऽत्यन्तभक्तिप्राप्तिपूर्वकान्येशप्रीतिद्वारा स्वेष्टेश्वरप्रसादसिद्धये विशेषार्चनेनार्चयिष्य एवं संकल्पयेत् ॥ ७४ ॥

यान्यं यान्यं काममभीप्सं समूहेत् ॥ ७५ ॥

योऽसंकल्प्य कर्म कुरुते तन्न्यूनफलमित्याचक्षते तस्मात्सर्वं संकल्प्य कर्म कुर्यात्॥७६॥

**असंकल्प्य महत्फलमित्युन्मत्तभैरवः** ॥ ७७ ॥

वर्तुले षट्कोणे षोडशदले प्रोक्षिते वा स्ववामतः शुचि शङ्खादिपात्रं निधाय तच्छुद्धोदकेनापूर्य पुष्पगन्धांश्च निक्षिप्य वहिस्तमलङ्कृत्य तस्मिंस्तीर्थमावाह्य स्वाप्योंभूरित्यात्मानं प्रोक्षयेदोंभुवरिति संभारानोंस्वरिति देवताप्रतीकमोंभूर्भुवःस्वरिति दिगन्तराणि यदात्मानं प्रोक्षते तदात्मानं शुचिं कुरुते प्रमादेभ्यो निर्गमयति स्वतो जातेष्वपराधेषु देवताविनोदास्पदीभूतमेवात्मानं कुरुते यत्सम्भारान्प्रोक्षति तच्छुचि देवतामनोरम्यं देवताधिष्ठेयमेव कुरुते यद्दिगन्तराणि प्रोक्षति तत्तत आगतान्पशून्मनुष्यान्देवांश्च शुचीन्संभाव्यानेव कुरुते प्रतिकूलाननुकूलानेव विदधाति तस्मादेवं प्रोक्षयेत् ॥ ७८ ॥

**ॐ भूर्भुवःस्वरित्यनेनैव सर्वं प्रोक्षयेदिति केचित्** ॥ ७९ ॥

स्वेष्टेशगायत्र्याः प्रथमेन पादेनात्मानं द्वितीयेन सम्भारांस्तृतीयेन देवताप्रतीकं सर्वदिगन्तराणि प्रोक्षये**दित्येके** ॥ ८० ॥

एवं वामी प्रोक्षये**दित्युन्मत्तभैरवः** ॥ ८१ ॥

यावतां वैदिकानां मन्त्राणां प्रयोगो यत्र तत्र स्वेष्टेशचतुर्थ्यन्तेन नाम्ना नमोन्तेन शूद्रः कुर्यात् ॥ ८२ ॥

तद्वदनुलेपनाभरणो दाक्षिणः स्मार्तं कवचं पठेत् ॥ ८३ ॥

वामी ताम्रं कवचं पठेत् ॥ ८४ ॥

श्रौतर उभयं द्वयोरन्यतरं वा प्रणवादिनमोन्तश्चतुर्थ्यन्तनाममन्त्रो वै **सर्वासां देवतानां मूलमन्त्रः** ॥ ८५ ॥

अयमेव प्रणववर्जितः **शूद्राणाम्** ॥ ८६ ॥

अयमेव **होमे स्वाहान्तः** ॥ ८७ ॥

सम्भारेभ्यो दूरतो दीपनामदेवताकं दीपं गन्धाक्षतपुष्पैर्वाभ्यर्चयेत् ॥ ८८ ॥

तत्तदीश्वरगायत्र्या तत्तदीश्वरस्तुतिमन्त्रेण मूलमन्त्रेण वा परिचरेत् ॥ ८९ ॥

परतो लोकादिलो लोकास्ततो भक्ततरनिकटाद्वा बाह्ये परिचरेत् विसर्जयेत्ततः ॥९०॥

आवाहयेद् यं सायुधं साल‍ङ्कारं सस्वशक्तिकं सस्ववाहनं सस्वभक्तमावाह्यासनं दत्वा स्थानानि कल्पयत्यासने विघ्नेश्वरं कल्पयामि तद्दक्षोर्ध्वतः करतः परशुं कल्पयामि तदधरतः करतोऽङ्कुशं कल्पयामि वामोर्ध्वतः करतः कमलं कल्पयामि तदधरतः करतः पाशं कल्पयामि कर्णयोः कुण्डले कल्पयामि गळतो मालां नाभिलम्बिनीं कल्पयामि हस्तेषु वलयानि कल्पयामि वस्त्रादीन्याभरणानि सुन्दराणि यथावयवं कल्पयामि वामतः पुष्टिं शक्तिं कल्पयामि दक्षतो मूषं वाहनं कल्पयामि तत्परितस्तद्भक्तान्देवानृषीन् सिद्धान्कल्पयामीति कल्पयेत् ॥ ९१ ॥

सायुधं साल‍ङ्कारं सस्वशक्तिकं सस्ववाहनं सस्वभक्तमावाह्यासनं दत्वा स्थानानि कल्पयत्यासने रुद्रं कल्पयामि दक्षोर्ध्वतः करतः परशुं कल्पयामि दक्षाधरतः करतस्त्रिशूलं कल्पयामि गळतो मालां नाभिलम्बिनीं कल्पयामि हस्तेषु वलयानि कल्पयामि वस्त्रादीन्याभरणानि सुन्दराणि यथावयवं कल्पयामि वामतो गौरीं शक्तिं कल्पयामि दक्षतो वृषभं वाहनं कल्पयामि परितस्तद्भक्तान्देवानृषीन्सिद्धान्कल्पयामीति कल्पयेत् ॥ ९२ ॥

सायुधं साल‍ङ्कारं सस्वशक्तिकं सस्ववाहनं सस्वभक्तमावाह्यासनं दत्वा स्थानानि कल्पयत्यासने विष्णुं कल्पयामि दक्षोर्ध्वतः करतश्चक्रं कल्पयामि तदधरतः करतः कौमोदकीं कल्पयामि वामोर्ध्वतः करतः कमलं कल्पयामि तदधरतः करतः शङ्खं कल्पयामि वस्त्रादीन्याभरणानि यथावयवं कल्पयामि वामतः शक्तिं लक्ष्मीं कल्पयामि दक्षतः पन्नगाशनं वाहनं कल्पयामि परितस्तद्भक्तान्देवानृषीन्सिद्धान्कल्पयामीति कल्पयेत् ॥ ९३ ॥

सायुधां साल‍ङ्कारां सस्वशक्तिकां सस्ववाहनां सस्वभक्तामावाह्यासनं दत्वा स्थानानि कल्पयत्यासने शक्तिं कल्पयामि दक्षोर्ध्वतः करतः कृपाणं कल्पयामि तदधरतः करतस्त्रिकण्टकं कल्पयामि वामोर्ध्वतः करतः कमलं कल्पयामि गळतः कमलमालामम्लानां नाभिलम्बिनीं कल्पयामि कर्णयोः कुण्डले कल्पयामि वस्त्रादीन्याभरणानि यथावयवं कल्पयामि वामतश्चण्डिकां शक्तिं कल्पयामि दक्षतः सिंहं वाहनं कल्पयामि परितस्तद्भक्तान्देवानृषीन्सिद्धान्कल्पयामीति कल्पयेत् ॥ ९४ ॥

सायुधं साल‍ङ्कारं सस्वशक्तिं सस्ववाहनं सस्वभक्तमावाह्यासनं दत्वा स्थानानि कल्पयत्यासने सूर्यं कल्पयामि दक्षहस्ततश्चक्रं कल्पयामि वामहस्ततः शङ्खं कल्पयामि कर्णयोः कुण्डले कल्पयामि वस्त्रादीन्याभरणानि यथावयवं कल्पयामि वामतः संज्ञां शक्तिं कल्पयामि दक्षतः सप्ताश्वं हिरण्मयं रथं वाहनं कल्पयामि आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्मयेन सविता रथेन देवो याति भुवनानि पश्यन् इति दर्शनात्परितस्तद्भक्तान्देवानृषीन्सिद्धान्कल्पयामीति कल्पयेत् ॥ ९५ ॥

सायुधां साल‍ङ्कारां सशक्तिकां सवाहनां सस्वभक्तामावाह्यासनं दत्वा स्थानानि कल्पयत्यासने कालीं कल्पयामि दक्षोर्ध्वतः करतः खड्गं कल्पयामि तदधरतः करतः

शिखायुत ग्रीवान्त मनुजाकृतिमुण्डं कल्पयामि वामोर्ध्वत करतोऽभय कल्पयामि तदधरत करतो वर कल्पयामि दक्षत. सिंहवाहन कल्पयामि परितस्तद्भक्तान्देवान्पीन्सिद्धान्कल्पयामीति **कल्पयेत्** ॥ ९६ ॥

एवम-पत्राप्यूह्य **कल्पयेत्** ॥ ९७ ॥

प्रतीकसम्पादन सम्भारसम्पादन अर्थवत्तेपामासादन शुचित्वेनात्मनो मनोहरत्वेन भावन देवतावाहन तस्या आसनदानकल्पन पात्रान्तरे प्रतीकानयन जलानां तस्मिन्निनयन **सिंहासने** प्रतीकस्थापन वस्त्रोपचरण अलङ्कारभूषण गन्धलेपन अक्षतप्रक्षेपण पुष्पविकिरण आदर्शदर्शन सुगन्धतैलाघ्रापण धूपन दीपन भक्ष्यनिवेदन पेयनिवेदन कथाश्रावण प्रार्थनाश्रावण वा पात्रान्तरे जलनिनयन मुखक्षालनार्थं हस्तक्षालनार्थं पादक्षालनार्थं अर्पितस्योत्तरतो निनयन भूसमार्जन पुरतस्ताम्बूलनिवेदन आदर्शदर्शन सुगन्धतैलाघ्रापण सुगान वीजन ऋते शैलेभ्य पुरत कर्पूरनीराजन प्रदक्षिणा प्रणमन प्रार्थनास्तोत्र वा पुष्पाञ्जलिं हवि प्रतिपत्ति अन्ते वाम्नीना यजनमन्त्रैर्वा पर तत आयुधान्यलङ्कारान् शक्ति वाहन तद्भक्तान् गन्धाक्षतपुष्पैरर्चयेदेव मण्डलार्चन **मण्डलार्चनक्रमोऽप्येवं** देवताप्रणमन विसर्जन च उत्तरतो निर्माल्यनिनयन तीर्थविसर्जन च ॥ ९८ ॥

प्रतीकसम्पादनम् ॥ ९९ ॥

तद्व्यक्तावयव चेत्पादयो पाद्यमेव यथास्थानमुपचारैरुपचरेत् ॥ १०० ॥ ११०० ॥

सर्वेषामुपचाराणा भावनाश्च भावनीया ॥ १ ॥

गायत्र्या चैतैस्त्रिभिर्नामभिर्द्वितीयान्ते प्रथमान्तैर्वा ता तर्पयेत् ॥ २ ॥

तर्पणे प्रसन्नेय**मिति भावना** ॥ ३ ॥

तस्यै **वस्त्रे** सावयवा चेदेकेन वस्त्रेण नाभौ परिवीय कुक्ष्यो सम्बध्य तदेकदेशेन पश्चात्कच्छापयेदेवमग्रत एव स्कन्धत ॥ ४ ॥

या कौपीनेन परिधापयितुमिच्छेच्चेत्कटौ कटिसूत्रग्रन्थि दक्षिणत कौपीनमग्रत कच्छापयेत्तदर्थमानायान्तोर्ध्वमग्रत एकेन पश्चात्कच्छापयेद्वहिस्तो नाभौ साळङ्कृत वस्त्र परिधापयेत् चेत्स्वय धर्तुमिच्छेदेरा परिदद्यात् ॥ ५ ॥

तत्सिंहासने नीवाऽनामिकया **गन्धबिन्दु** सावयव चेद्यथेच्छेत्तथा लेपयेद्भाले कण्ठकूपे हृदि दोर्मूलशिर सु बिन्दुभिर्वा ॥ ६ ॥

एव स्वामान च यथाभिमतप्रकारेण वा ॥ ७ ॥

तद्भक्तानामुपचाराणा स्ववामतो दूरत स्थापनम् ॥ ८ ॥

तद्भक्ताना सव्यस्तदभुक्तेषु न कार्य **इति केचित्** ॥ ९ ॥

यथा स्वनामेरधोऽशुच्यशुच्यूर्ध्वं नेवमीश्वरे। सच्चिदानन्दशीर्षश्च सच्चिदानन्दपादवास्तस्मात्पादोदकाद्युपभुक्तसङ्कर शिरोर्पणीयेषु न निषिद्ध **इत्यपरे** ॥ १० ॥

भालेऽक्षतान्मूर्ध्नीत्येके ॥ ११ ॥

*पुष्पाणि मूर्ध्नि* ॥ १२ ॥

**आदर्शमग्रतः** ॥ १३ ॥

पुष्पेण सुगन्धतैलं गृहीत्वाऽऽघ्रापणं तत्प्रतीके निक्षिपेत्तत्पुरतः स्थापयेदित्येके ॥ १४ ॥

**धूपनं** देवतावामतः पात्रे ॥ १५ ॥

**दीपनं** देवतादक्षतः ॥ १६ ॥

**भक्ष्यं पेयं** प्रोक्षिते चतुष्कोणे कृतमण्डले वा पात्रे पुरतो दक्षतः ॥ १७ ॥

वामी तथैव पात्रे पुरतो वामतः ॥ १८ ॥

न केवलं देवतापुरतो दद्यात् ॥ १९ ॥

वामी **मद्यं** शोधयेत्सौरैर्वारुणैराग्नेयै रौद्रैस्तत्प्रोक्षयेत्तत्प्रोक्षितं शुचि सम्पद्यत **इति केचित्** ॥ २० ॥

सम्भारप्रोक्षणेन तत्प्रोक्षितं शुचि भवति तस्मान्न तच्छोधन**मित्येके** ॥ २१ ॥

*मद्यं वामतो देवतायाः* ॥ २२ ॥

**स्तोत्रैः** स्तुवीत **विनोदैर्वा** देवतां हासयेद्वा **देवतायशो** गायेन्नृत्तं वा कुर्वीत देवताह्लादाय ॥ २३ ॥

ततो मध्ये पानार्थं **जलं** दक्षतो देवतायाः ॥ २४ ॥

ततो देवतापुरतः पात्रं संस्थाप्य तस्मिन्**हस्तक्षालनाय मुखक्षालनाय पादक्षालनाय** च जलं निनयेत् ॥ २५ ॥

**ताम्बूलं** पुरतः ॥ २६ ॥

मन्त्रमुच्चार्यामुकायै देवतायै अमुके स्थाने अमुकार्थं अमुकं प्रयोगं विनियुनज्मीति प्रयोगविनियोगार्चन एवं दद्यात् ॥ २७ ॥

दानार्चने तथैव दद **इति दद्यात्** ॥ २८ ॥

अर्हणार्चने कल्पयामी**ति कल्पयेत्** ॥ २९ ॥

*सर्वानुपचारान् गन्धपुष्पैरर्चितान्दद्यादृते गन्धाक्षतपुष्पेभ्यः* ॥ ३० ॥

पुष्पैरेवार्चितान्द**द्यादित्येके** ॥ ३१ ॥

अलाभे सर्वेषां जलं सुगन्धतैलमाघ्राणार्थं देवतावस्त्रेष्वाभरणेषु वा पुरतः ॥ ३२ ॥

आदर्शं दर्शयेत् ॥ ३३ ॥

ततोऽग्नेः कुण्डस्य पश्चाद्धस्ताय खलु यत्र क्वच होष्यन्त्यादिषुमात्रावरं सर्वतश्चतुष्कोणं सौरमेय्याः शकृता लेपनं तन्मूत्रेणाभ्युक्षणं कुशसंमार्जन्या संमार्जनं विराम उदकैः सेचनं सौवर्णेन राजतेन ताम्रेण लौहेन यज्ञियवार्क्षेण वा धर्मपालेन कर्तिताग्रमध्यबिल्वदलाकारेण पङ्क्तुत्सरुणा गन्धाक्षतपुष्पसुगन्धतैलाक्तेन षड् लेखा उल्लिखेत् ॥ ३४ ॥

धर्मपाल त्वा मुष्टिना त्सरौ गृह्णाम्यविघ्नत्वायोर्ज **इति धर्मपालं गृह्णीयात्** ॥ ३५ ॥

अग्नयो वा एते बहवो यत्सारो गाणप शाक्त शैवो वैष्णव कापालो ब्राह्मो गार्हपत्यो दक्षिण आहवनीय सभ्य आवसथ्यो माण्डल पार्थिव औदको वायव्यो वैद्युत सुमङ्गलो बलवर्धन ऐन्द्र सौम्यो वैश्वदेव क्रव्यादस्तस्मादयमग्निमिच्छेत्तन्नामोहेत् ॥ ३६ ॥

अमुकाग्नये त्वा प्रथमामुदगायता रेखामुल्लिखामि तथैव प्रागायता तस्या द्वितीया तस्याएव प्रागायता तृतीया तयो प्रागायतयोर्मध्ये तथैव तिस्र प्रागायता एव षड्लेखा धर्मपालाग्रेणोल्लिखेत्तस्मिन्स्थण्डिले कुण्डे वा ॥ ३७ ॥

ततोऽभ्युक्षाम्यमुकमग्निं समाण्डलाग्निं सवैश्वदेवाग्निं वाऽऽराहयेदावाहयाम्यस्मिन्सन्निदधामीत्यग्निं पाणिभ्यामाच्छाद्य प्रतिष्ठापयेद्रेखासु कुण्डे स्थण्डिले वा ॥ ३८ ॥

अरणिज सूर्यकान्तज आदमो वा प्रतिष्ठाप्यो यदीहेत्**क्रतुमान्**स्यामहमिति तदरणिज यदीहेत्**कान्तिमान्**सुरूप स्यामहमिति तत्सूर्यकान्तज यदीहेत्सर्वसमृद्धेभ्यो **बलवान्** स्यामहमिति तदाश्म प्रतिष्ठापयीत ॥ ३९ ॥

दीपज्योतिषि त्रयो वा एते वर्णा यच्छ्वेतस्ताम्र कृष्ण यच्छ्वेत सशुभ्र यस्ताम्र सोऽरुणो यत्कृष्णस्तत्तमस्तस्मादेत सूर्यप्रतीक य प्रातरुदेति सूर्य सोऽरुण य मध्य तपति स श्वेत यत्सायमस्तमेति तत्तमस्तस्मा सूर्यमेव प्रतिष्ठापयति यत्सूर्या वा अग्नेर्विपोर्धे गृह्णाति तस्माद्य ईहेचेदह शान्तिमान् क्रतुमान्सर्वसमृद्ध स्यामिति तच्छ्वेतादग्निमाहृत्य प्रतिष्ठापयेच्छ्वेतमध्य सूर्य यन्मध्यसूर्यं प्रतिष्ठापयति तद्धृदयमुक्तिं सम्पद्यते यदीहेत्तेजस्वी व्रतचर्यावान्स्यामहमिति तद्रक्तादग्निमाहृत्य प्रतिष्ठापयेद्यदीहेदाच्छादितबल स्यामिति तत्कृष्णादग्निमाहृत्य प्रतिष्ठापयेत् ॥ ४० ॥

आग्नयो वा एष खङ्गस्तस्मादखङ्गो न किंचिदाग्नेय कुर्वीत ॥ ४१ ॥

अग्निमुपसमाधाय समिद्धय त्रय वाऽऽद्रायास्मिन्नन्वाहितेऽग्नौ जातवेदसमिध्मेन **ह**विषामुका देवतामेकवार द्विरायुधानि पृथक् पृथक् वा तदाभरणानि त्रि शक्तिं चतुर्वाहन पञ्च षट् तद्व्रतान् शेषेण स्विष्टकृत मण्डल च होम्य इत्योभूर्भुव स्वरिति समिधावाधाय्याद्भि परिसमुह्य त्रि पुरस्तादक्षत पश्चादुत्तरत कुशै परिस्तीर्याद्भिस्त्रि पर्युक्षणम् ॥४२॥

स्रुव्स्रुवानग्नौ निष्टपेत् ॥ ४३ ॥

दुग्धदधिघृतेष्वन्यतम हविर्गोरजायाया ॥ ४४ ॥

**नैत्यार्चने घृतं हविरितीच्छामः** ॥ ४५ ॥

**यथाविधानमित्येके** ॥ ४६ ॥

अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ **पवित्रे** ॥ ४७ ॥

छिन्नाग्राविति **केचित्** ॥ ४८ ॥

कुशाभ्यां द्रवहविष उत्पवनं शुद्धिः ॥ ४९ ॥

हिरण्यशलाकया वा धर्मपालेन स्पष्टं शुचि हविः सम्पद्यते ॥ ५० ॥

एषा सर्वेषां हविषां शुद्धिः ॥ ५१ ॥

एतद्यत्र कुत्रचिदाग्नेयेध्ममभिघारितं जातवेदसे समण्डलाग्नये जुहुयात् ॥ ५२ ॥

हुत्वा तस्मादग्नेर्हूर्ध्वं तूष्णिमिन्धनशकलान्यादध्यात् ॥ ५३ ॥

वायवो वा एते बहवो यत्सौरो गाणपः शैवो वैष्णवः शाक्तः कापालो ब्राह्म ऐन्द्रः सौम्य आग्नेयो मेध्यो वैद्युतो वर्ण्यो वैश्वदेवो माण्डलः प्राणोऽपानो व्यानोदानौ समानस्तस्माद एते चान्ये च ये वायवस्तेऽग्निसखायस्तस्माद्योऽग्निः स्यात्तत्सदेव तं वायुं व्यजनेन प्रेरयेदमुकाग्नये प्रदीप्त्या अमुकवायुं व्यजनेन प्रेरयामीति प्रेरयेत्तं प्रदीपयेत् ॥ ५४ ॥

विश्वेदेवा अस्य देवास्तस्मादेष वैश्वदेवो देवानां मण्डलमृषीणां मण्डलं मनुष्याणां मण्डलं सिद्धानां मण्डलं मण्डलस्यायं तस्मादेष माण्डलस्तस्माद्वैश्वदेवमाण्डलौ स्याताम् ॥ ५५ ॥

यत्र वा म्लानः स्यादग्निस्तत्रानेन प्रज्वालयेत् ॥ ५६ ॥

सकृदेवं नासकृदेवमिति **दिग्भैरवः** ॥ ५७ ॥

तस्मा अग्नये जुहोति ॥ ५८ ॥

पृथिव्यो वा एता बह्वयो यत्सौरी गाणपी शाक्ती शैवी वैष्णवी ब्राह्मी भैरवी ऐन्द्री वारुणी सौम्या याम्या आग्नेयी वायवी पार्थिवी वैश्वदेवी माण्डली जीव्या ऊखरी सर्वा या एता आधारीभूतास्तस्माद्यो वायुः स्यात्तत्सदेवतामूहेतामुकाग्न्याधारीभूतां स्थण्डिलायतां अमुकां पृथ्वीं परिसमूहामीति त्रिः सकृद्वा स्थण्डिलं परिसमूहेत् ॥ ५९ ॥

कुशैः स्थण्डिल परिस्तृणीयात् ॥ ६० ॥

आपो वा एता बह्वयो यत्सौरी शैवी ब्राह्मी वैष्णवी शाक्ती गाणपी मेध्या आग्नेयी वायवी पार्थिवी जाली वैश्वदेवी माण्डली सिकतोत्तरा पाषाणोत्तरा हिंस्रयादोगणाकीर्णा अहिंस्रयादोगणाकीर्णा प्रकृतिस्थाः शुद्धाः पङ्कोत्तराः सर्वा एव शान्ताः शान्ताभिरेव पर्युक्षणं तस्माद्योऽग्निः स्यात्तत्सदैवता अप ऊहेदमुकाद्भिरमुकमग्निममुकां पृथ्वीं वा पर्युक्षामीति पर्युक्षेत् ॥ ६१ ॥

स्रुचि चतुर्गृहीतं वा यावती महती स्रुक् स्यात्तावद्भिः स्रुवैस्तामापूर्य जुहुयात् ॥६२॥

तस्मात्पूर्वतो यावान्महान्पुरुषः शयानः स्यात्तावतीं भूमिमपहाय संस्कृते स्थण्डिले परिस्तीर्णेऽग्निमाहरेदेतस्मात्कुण्डादर्धं वा यथादेशं पूर्वतो यदाहनो मरुत्भिरेव देवताग्निः कालाग्निरिति द्वे नामधेये स्यातां यस्ये देवतायै हविराजहति तद्देवताग्निं प्रतिष्ठाप्योपसमाधाय परिसमुह्य पर्युक्षेत् ॥ ६३ ॥

खेष्टेरागायत्र्या देवतायै हविर्जुहुयात्तस्मिन्नग्नौ वा मूलमन्त्रेण स्रुवेण स्रुचा वा ॥६४॥

देवताया एकमाहुतिं देवतायुधेभ्यो द्वे तिस्रो देवतालङ्कारेभ्यस्ततस्रो देवताशक्त्यै

पञ्च देवतावाहनाय षड् देवताभक्तेभ्यो वा षड् देवताया आहुतीः पञ्च देवतालङ्कारेभ्यश्च-तस्रो देवतायुधेभ्यस्तिस्रः शक्त्यै देवतावाहनायैकां देवताभक्तेभ्यः स्रुवेण स्रुचा वा जुहोति तत्संख्यैः स्रुवैस्तामापूर्य जुहुयाद्वैकां स्रुगाहुतिं सर्वेभ्यो हविर्गृह्णीयादमुकाय त्वा हविर्गृह्णामि स्रुवेन गृह्णामीति गृह्णीयात्कालाग्नौ देवतायै तिष्ठन्हुत्वा ततः कालाग्नेरर्धमाहरेत् ॥ ६५ ॥

यत्कालाग्निरर्धमाहरत्येष वै नीयमान उक्तवत्स्थण्डिले प्रतिष्ठाप्यो भवत्यस्य नामधेये द्वे दिगग्निः परिच्छिन्नाभासोऽग्निरिति अस्मिन् जुहोति आभरणायुधशक्तिवाहनेभ्यो भज-नेता देवता जुहोत्येनं दाक्षिणमग्निं वदन्ति ब्रह्मवादिनो यस्मात्कालाग्नेर्दक्षिणतोऽयं दिगग्निः कालाग्निं प्रदक्षिणीकृत्य पूर्वाभिमुखस्तिष्ठन्नाभरणेभ्यो जुहोति पुनरेवं पश्चिमाभिमुख आयुधेभ्यो जुहोति पुनरेवं उत्तराभिमुखः शक्तये जुहोति पुनरेवं दक्षिणाभिमुखो वाहनाय जुहोति यदेवमैश्वरं मण्डलमस्मिन्नग्नौ परीत्य परीत्य जुहोति तद्भजन्नेव हुतं भवति ॥ ६६ ॥

यस्मात्कालाग्निः प्रणीयते तदस्य द्वे नामधेये आकाशाग्निर्मण्डलाग्निरित्यस्मिन्जुहोति भक्तेभ्य आसीनो जुहोति ॥ ६७ ॥

वा अग्निं न प्रणयन्त्येकस्मिन्नेवाग्नौ जुहुत्येवं **ब्रह्मवादिनः** ॥ ६८ ॥

देवतोच्छिष्टमवदायास्मिन्नाकाशाग्नौ **जुहुत्येके** ॥ ६९ ॥

देवतोच्छिष्टस्य क्रमशः पात्राणि गृह्णाति हवि.प्रतिपत्त्यगारं प्रविश्य पादोदकमर्घ्यो-दकमाचमनोदकं स्नानोदकं पीत्वा भ्रूमध्यं कण्ठकूपे हृदयं बाहुमूले शिरश्च गन्धेनानुलिप्य **वामी** चेन्मधम्—इदं पवित्रममृतं गृह्णामि भवमेषजम् ।

पशुपाशसमुच्छेदं कारणं भैरवोदितमिति मधं प्राश्नीयात् ॥ ७० ॥

ऐश्वरेणात्मानं वर्चसा समनज्मीत्युक्तानि स्थानानि गन्धेन प्रलिम्पेत् ॥ ७१ ॥

**अञ्जनं** व्याख्यातम् ॥ ७२ ॥

अमुकदेवतोच्छिष्टं अवदायामुकायेश्वराय वर्चसे स्वात्मनि विनियुनज्मीति सर्वमु-च्छिष्टं **परिगृह्णीयादित्येके** ॥ ७३ ॥

ऐश्वरेणानेन गृहीतेन शक्तेन विपाप्मा विरजा भूयासममृतानन्दी भूयासमिति **स्वीकारोत्तरं मन्त्रजपः** ॥ ७४ ॥

अमृतममृते जुहोमि स्वाहेति **स्वीकारमन्त्रोऽयं** सर्वत्र हुतेनामृतेनामृतो भूया-समिति स्वीकारोत्तरं मन्त्रश्चायं **सर्वत्रेति केचित्** ॥ ७५ ॥

सर्वदेवतोच्छिष्टं भुञ्जीत दीक्षितो न पुनर्भुक्तं देवतायै प्रयच्छेत्तस्यै ॥ ७६ ॥

आसनवस्त्रोदकभक्ष्यगन्धादर्शान्भक्ष्यान्पेयानुपभोग्यान्धार्याननुलेप्यानाघ्रेयान्देवतो-च्छिष्टान्भुञ्जीत तत्रासनादर्शौ च प्रोक्ष्य तस्यै च पुनः प्रयुञ्जीत ॥ ७७ ॥

कर्मणोऽन्ते **हविःप्रतिपत्तिरित्येके** ॥ ७८ ॥

**सर्वेषां मन्त्राणामनुकल्पो मौनमर्थवद्भावनं वा ॥ ७९ ॥**

**सर्वेषां द्रव्याणामनुकल्पो जलमर्थवद्भावनं वा ॥ ८० ॥**

**सर्वस्य नित्यनिवर्तनस्यानुकल्पः स्वेष्टेशस्वेष्टमन्त्रजपः ॥ ८१ ॥**

**सर्वेषां मन्त्राणामनुकल्पो गायत्री तत्तदीया मूलमन्त्रो वा तत्तदीयः ॥ ८२ ॥**

**मतानुसन्धानस्यानुकल्पः स्वस्य स्वशास्त्राभिमेतः पदार्थचतुष्टयविचारः ॥ ८३ ॥**

**गुर्वभिवादनस्यानुकल्पो गुर्वर्थे नम्रता ॥ ८४ ॥**

देवतायै दक्षिणा दत्ता न स्वय परिगृह्णीयात्तद्भक्ताय ब्राह्मणाय प्रयच्छेदस्य स्वत्व ततो निवर्तते सवत्र स्वव प्रतिपत्त्यत, यथा वाऽक्षतानां बलिहरण भूतेभ्य प्राणिभ्य पुष्पाणा जले निर्हरण एवमन्यत्र ॥ ८५ ॥

देवताप्रसादमुररीकृत्य मुख प्रक्षाल्य द्विराचा तोऽमर्दिगग्नेरर्धमाहृत्य कालाग्नौ प्रलस्य बहिर्द्वयो कुण्डयोर्हु वाऽऽकाशाग्नौ कालाग्नेरर्धमाहृत्य न्यस्य हुतवह्नि कुण्डयोरग्नी लौकिकौ सम्पद्येते एतस्मिन्नग्नौ एता देवता जुहोति पृथ्वीरपस्तेजासि वायू दिक्कालाकाशानग्नीषोमौ छन्दास्यृषीन् श्रद्धामेधे हुत्वा एतस्य आकाशाग्नेर्बहिराकाशाग्नौ हुत्वाऽय लौकिक सम्पद्यते यथा तो ॥ ८६ ॥

शिष्टमवदाय स्विष्टकृदस्मिञ्जुहुयादिति **केचित्** ॥ ८७ ॥

दक्षिणा नित्यार्चने स्वदेवतायै न प्रयच्छे**द्विशेषार्चने चेत्येके** ॥ ८८ ॥

**सर्वेषामपराधानां क्षमापनस्यानुकल्पस्तद्गायत्र्या दशवारं जपस्तत्तन्मूलमन्त्रस्य वा ॥ ८९ ॥**

**दीक्षितानां महद्भिरपराधैर्युक्तानामेषैव प्रायश्चित्तिरावृत्तावप्यपराधानामिति सुरानन्दः ॥ ९० ॥**

यथा वा एतस्य **पङ्कस्पृष्टस्य क्षालनं ह्रदे प्रायश्चित्तिस्त**स्माक्षालनेन स्वच्छ सम्पद्यते पङ्कस्पर्शावृत्तावप्येतत्स्वच्छीकुरुते एव **यदस्य प्रायश्चित्तं तदावृत्तावपीति सुरानन्दः ॥ ९१ ॥**

**पापावृत्तौ प्रायश्चित्तावृत्तिरित्युन्मादानन्दः ॥ ९२ ॥**

एकवार पाप कृत चेदेकवार एकगुण प्रायश्चित्त द्विवार द्विगुण त्रिवार त्रिगुण चतुर्वार चतुर्गुणमेव प्रायश्चित्त**मिति मुक्तानन्दः ॥ ९३ ॥**

एकवारमेकगुण द्विवार द्विगुण त्रिवार पतितो भवति न तत प्रायश्चित्तमिति **ज्ञानानन्दः ॥ ९४ ॥**

अज्ञानात्कृते प्रायश्चित्त ज्ञानकृतेऽप्येकवार ततो न प्रायश्चित्तमित्य**मृतानन्दः ९५**

अग्निकार्यं तत्कृताकृतम् ॥ ९६ ॥

देवतायै प्रदक्षिणं परीत्य पुष्पाञ्जलिं देवतामूर्ध्नि प्रयच्छेद्वामी प्रकामं परीत्योत्तरतः प्रदक्षिणप्रणामयोरन्यतरं वा ॥ ९७ ॥

पादयोरि**तीशाननिलयः** ॥ ९८ ॥

दाक्षिणो दक्षतो वामी वामतः प्रणमेत् ॥ ९९ ॥

ध्यानानुसन्धानं मदपराधान् क्षमस्वेति क्षमापनम् ॥ १०० ॥ १२०० ॥

यज्जुहोमि ममाभीष्टं यत्करोमि ददामि यत् ।

यत्तपस्यामि सुतपस्तत्करोमि त्वदर्पणमितीशदक्षहस्ते जलं निनयेद्वा तद्दक्षिणतो भूमौ ॥ १ ॥

दासोऽस्मीति निवेदनम् ॥ २ ॥

**ॐअमुकामुक मध्यमाविर्भवाविर्भव स्वाहेत्याविर्भाव**याचनं गन्धाक्षतपुष्पैस्तदन्यतमेन वाभ्यर्चयेत् ॥ ३ ॥

यथा क्रमकल्पनं तथैवाभ्यर्च्य समण्डलान् देवतामूर्ध्नि पुष्पाञ्जलींस्तद्वयःसंवत्सरसंख्यया वा निनयेत् ॥ ४ ॥

गन्धाक्षतपुष्पैरमुकायै देवतायै साभरणायै सायुधायै सशक्तिकायै सस्ववाहनायै सस्वभक्तायै स्वलोकप्रतिष्ठित्यै विसर्जनं विनियुनज्मि पुनरागमनाय पुनः संदर्शनायेति विसर्जयेद्द्वितीयान्तानि वा योजयेत्तदनुक्रियापदं च ॥ ५ ॥

देवतायास्ततो मन्त्रं जपेत् ॥ ६ ॥

आचमनं मौनमासनं सर्वत्र यथाविधानं वा ॥ ७ ॥

**माला त्रिविधा** ॥ ८ ॥

**करपर्वमय्यक्षमयी पदार्थमयी** ॥ ९ ॥

अनामिकाकनिष्ठामध्यमातर्जन्यो वा एताश्चतस्त्रस्त्रिपर्वा एतासां सर्वपर्वाण्याक्रमणीयानि मध्यानामिकयोर्मध्ये यत्पर्वणी ते उभे मेरुर्भवत्येतस्याः करपर्वमध्यादङ्गुष्ठो द्विपर्वस्तदाश्रान्त। तस्यारेमाक्रामेत्प्रथममनामिकापर्वमूलतः द्वितीयं कनिष्ठिकामूलतः पर्वतृतीयं तन्मध्यतश्चतुर्थं तदग्रतः पञ्चममनामिकाग्रतः पर्वषष्ठं मध्यमाग्रतः पर्वसप्तमं तर्जन्यग्रतः पर्वाष्टमं तन्मध्यतो नवमं तन्मूलतो दशमं मध्यमामूलत एवं यो गणयत्येतद्दशकं वामकरतस्तच्छतसंख्या सम्पद्यते। य एतां मालां कुरुते सोऽवधूतपदवीमात्मानं गमयति ॥ १० ॥

रुद्राक्षभद्राक्षप्रवालमौक्तिकस्फटिकस्वर्णाक्षतारणाक्षान्यतममयीं सुमेरुयुक्तां मालां यः कुरुते स स्वर्गे लोके गृहिभिर्गम्यं जयति ॥ ११ ॥

असूत्रितां पदार्थमयीं कुर्वन् शर्करादिभिः संख्यातैः संख्या कुरुते स स्वर्गे लोके वन्यैर्गम्यमधितिष्ठति ॥ १२ ॥

दशसङ्ख्य शतसङ्ख्य सहस्रसङ्ख्यो वा, नैस्ये न सहस्रसङ्ख्याद‍धिक इष्यते जप. १३

वा तत्तदीशवय सवत्सरसङ्ख्यया जपेद्वा द्विस्त्रिर्जपेद्वा घटीद्वय घटीत्रय वा जपिष्यामीति वा जपेन्न पदार्थमथ्या मेरु ॥ १४ ॥

एतास्वन्यतमया जप कुर्वीत ॥ १५ ॥

**अथ मण्डलजपक्रमं वक्ष्यामः ॥ १६ ॥**

शत यदि जपेत्स्वेष्टेशमनु अमुकायुधेभ्यो नम इत्यायुधमण्डल दश जपेत्पृथक् पृथक् वा शत जप्त्वाऽमुकाभरणेभ्यो नम इत्याभरणमण्डल दश जपेत्पृथक् पृथक् तथैव वामुकवाहनायामुकाय नम इति वाहन जपेद्वा तत्तन्नामोद्देशा सर्वत्र दश जपेच्छक्तिममुकशक्तयेऽमुकाय नम इति अमुकभक्तेभ्य सिद्धेभ्य ऋषिभ्यो देवेभ्यो नम इत्यमुकादिभ्य इति वा तथा तथा समस्तमण्डलजपक्रम एष ॥ १७ ॥

दश यदि जपेत्स मनुमेकवारं मण्डल मण्डलवदेष **समस्तमण्डलजपक्रमो लघुः ॥ १८ ॥**

अथैक मण्डल श्व एक मण्डलमेव वा तद्वदेष **व्यस्तमण्डलजपक्रमः ॥१९॥**

मण्डलस्यार्चन युक्त न मण्डलजप **कचिदित्युन्मत्तभैरवः ॥ २० ॥**

नाम्ना दिव्यानां सहस्रेण ता स्मार्तेन दाक्षिण स्तुवीत ताम्रेण वामी तयोरन्यतरेणोचरस्तदसभवे श्रोतस्मार्तान्यतरेण दक्षिणी स्तोत्रेण वामी श्रौततानाम्न्यतरेण **प्रथमनित्यार्चने येन तेनैव नित्यशः ॥ २१ ॥**

गन्धपुष्पाक्षतैरर्चति वान्यतमेन वा ॥ २२ ॥

देवतामेकवार द्विस्त्रिस्तद्वय सवत्सरसङ्ख्यया वाभ्यर्च्य मण्डलमर्चयेन्मण्डले मण्डले समस्य पृथग्वा यथाकल्पनमभ्यर्च्य मण्डलानि पुनस्तान्पुष्पैर्निकीर्यामुकायै सायुधायै वा साभरणायै सायुधायै वा सवाहनायै सशक्तिकायै सस्वभक्तायै स्वलोकप्रतिष्ठितायै विसर्जन विनियुनज्मि स्वेच्छाप्रतिष्ठित्यै वा पुनरागमनाय पुन. सदर्शनायेति विसर्जयेद्वा द्वितीयातानि प्रयुज्य यथेच्छाविहाराय विसर्जनेन विनियुनज्मि **इति वा ॥ २३ ॥**

स्ववामतो नीत निर्माल्य सर्वं लौकिक सम्पद्यते तत्सर्वमुद्वाहुकपुरुषद्वयमित दीर्घमेषपुरायत कुत्रचिच्छुचौ देशे गर्तं खनित्वा तस्मिन् प्रक्षिपेत् ॥ २४ ॥

तस्माद्यावद्भूमितो जल नाप्नोति तावत्खनेदि**ति दिग्भैरवः ॥ २५ ॥**

तीर्थं यदुत्तरतो निनयति तस्माद्यदात्मान प्रोक्षति यन्निनयति तत्तीर्थं विसर्जयति यदात्मान प्रोक्षति तदात्मान गङ्गाप्लुत कुरुत **एषोऽवभृथः ॥ २६ ॥**

साधकवामतो निनयनाद्वाहुल्यादशुचिस्पर्शाद्रूपान्तरपरिणमनान्निर्माल्य यात्यवन्द्यतां लौकिक चैमि सम्पद्यते अवन्द्यता गत योऽनुवन्दयेत्स पाप्मा भवति तस्माच्छिरस्याधाय वामतो निनयेत् ॥ २७ ॥

वामतो निनयनादव्ययतां निर्माल्यं व्रजतीत्येके **बाहुल्यादेके शुचिस्पर्शनादेके रूपान्तरपरिणामादेके वन्दनादेक एतेष्वन्यतमेनैके** ॥ २८ ॥

ये प्राणिनो यथाकथंचिदस्मिन्नुपयुक्ता भवन्ति ते स्वर्गं कामयन्ति स वा राजसास्तामसाः ॥ २९ ॥

**मानुष एवं कुर्वन्कर्मादृष्टं समर्जयितुं समर्थो नान्यः समर्थ** इति **कालभैरवः** ॥ ३० ॥

या वा एता वेश्या उपयुक्ता भवन्त्यस्मिन्नेताः स्वर्गं लोकं जयन्ति यथा वा ऋत्विजो यजमानं याजयन्ति न ते स्वर्गं जयन्ति स्वर्गो वा एष उच्चैर्दक्षिणा वा एता गुर्व्यस्ता यद्यजमान ऋत्विक्षु परित्यजति यदयं लघुः सम्पद्यते स उच्चैः स्वर्गं लोकं जयति त ऋत्विजो यस्मादादत्तदक्षिणा भवन्ति तस्माद्गुरवो भवन्ति तस्माद्गुरवो नोच्चैः स्वर्गं लोकं व्रजन्त्येवमेव ताः ॥ ३१ ॥

यद्यग्निकार्यं न कुर्याद्देवतां विसर्जयित्वा हविःप्रतिपत्तिं कुर्यात् ॥ ३२ ॥

याऽऽकाशाग्नावेवोपकल्पितं जुहुयान्न पृथक्कृतिरित्या**काशभैरवः** ॥ ३३ ॥

ये वात्मनोऽनिष्टाः स्युरुपचारास्तांस्तस्यै न दद्या**दित्युन्मत्तभैरवः** ॥ ३४ ॥

अग्निकार्यमन्तरा सर्वं मन्त्रवर्जं तस्यै **दद्यादित्येके** ॥ ३५ ॥

प्रयोगविनियोगार्चनं त्रिविधम् ॥ ३६ ॥

तत्रैकं व्याख्यातम् ॥ ३७ ॥

यदेकमेव प्रयोगं विनियुङ्क्ते **तद्द्वितीयम्** ॥ ३८ ॥

तदावर्तितं **तृतीयम्** ॥ ३९ ॥

चतुर्भिर्वा वेदैरुपचरितव्येयं देवता तस्मादृचाऽऽवाहयेद्यजुषा दद्यात्साम्ना स्तुवीताऽथर्वाङ्गिरसा विसर्जयेत् । प्रणवो वा एष चातुर्वेदिकस्तस्मादेतेन सर्वं वाऽतो बृहदीहेत तस्यैषा भूरिति ऋक्तो भुवरिति यजुष्टः स्वरिति सामतः सर्वा व्याहृतय एता अथर्वाङ्गिरस्तोऽतो **महरित्येके** तस्मात्तदार्थं तत्कुर्वीतैतद्यत्र कुत्रचि**दर्चनो विधिर्लघुरित्येके पारानन्दानाम्** ॥ ४० ॥

शिष्टे च व्याख्याते ॥ ४१ ॥

आवाहनविसर्जनाभ्यां रहितं नार्चनं **पारानन्दः** कचित्कदाचित्कुर्यात् ॥ ४२ ॥

पीठार्चनं यत्कुरुते आवाहनविसर्जनाभ्यां विना न तद्देवतार्चनं सम्पद्यते देवताऽर्कं न तत्सम्पद्यते ॥ ४३ ॥

सर्वत्र यद्यदसम्पन्नं तत्तन्मनसा सम्पादयेत् ॥ ४४ ॥

दानार्चनेऽर्हणार्चने मण्डलार्चनं न कुर्यादि**त्युन्मत्तभैरवः** ॥ ४५ ॥

आसनं दर्पणं व्यजनं छायार्थं यत्किंचिदन्यच्चैजसं मार्तिकं पानपात्रं भक्ष्यपात्रं सोपभुक्तमप्यलाभे प्रोक्ष्य देवतायै पुनः पुनः प्रयुञ्जीत ॥ ४६ ॥

देवताया भक्तस्य सर्वसम्बन्धस्तस्मात्पिता भूत्वा भक्तो देवतां पुत्रोऽयमिति परिचरति । यथा वा सत्पुत्रेऽतिवेलं भक्ष्यं न प्रयच्छति वा यथा सर्वेभ्यो दुःखेभ्यो रक्षत्यात्मानं तदर्थं क्लेशयति न तमेवं परिचरति तस्मात्पितृपुत्रवत्परिचरणं यदेतत्तस्मात्केचिदेवं परिचरन्ति ॥ ४७ ॥

यद्भक्तः पुत्रो भूत्वा देवतां पिताऽयमिति परिचरति यथा वा पितुर्दुःखसाध्यामाज्ञां नोल्लङ्घत एवं परिचरति तत्पुत्रपितृपरिचरणं तस्मादेतत्परिचरन्ति ॥ ४८ ॥

यद्भक्तः पुत्रो भूत्वा देवतां मातेयमिति परिचरति यथा वा पुत्रः कृतापराधो मातुर्न बिभेत्येवं देवताया न बिभेति कृतापराध एवं वा परिचरति भक्तः **शिष्यो** भूत्वा देवतां गुरुरयमिति परिचरति यथा वा गुरुणा ताडितोऽपि गुरोर्मनोवाक्कायकर्मभिर्हितमिच्छति गुरावुपभुङ्क्ते भुङ्क्ते उच्छिष्टं यत्तस्य यत्सम्पादयति तद्गुरवेऽर्पयत्येवं वा परिचरति भक्तः प्रजा भूत्वा देवता राजन्योऽयमिति परिचरति यथा वा राजन्यो मयि कृपां विदध्यात्तथा चरिष्यामीति यथा वा मामैश्वर्यवन्तं कुर्यान्नो अन्यथा मां शासयेदिति बिभेतीति भिया तत्प्रसादाय यतत एवं वा परिचरति भक्त उपासको भूत्वा देवतामुपास्यामीति परिचरति । यथा वा अस्माद् एतद्यद्यरुधिरं वा एताः समिधो वा एतत्संस्कृतं पिष्टमन्यज्जनं तद्विहितत्वादेयं विहितमिति दत्वा तत्प्रसादं परामृशति भक्तो विहितमिति प्रसन्नो भवत्येतस्मिन्विहितैनैषा तोष्या यथा वा एते कवयः पूज्याः पूजितैरेतैः स प्रसन्नः सम्पद्यते यथा वा एताः कामिन्योऽनुरक्ताः स्वस्मिन्नेता लाल्या लालिताभिः स प्रसन्नः सम्पद्यते यथा वा एते दुष्टश्चौरास्तिरश्चीना व्याघ्राः पशवोऽन्ये मानुषाश्च य एवं ते घातनीया घातितैरेतैश्च प्रसन्नः सम्पद्यते विहितमिति यज्ञाः प्रवर्तन्ते विहितमिति दानानि प्रवर्तन्ते विहितमिति दण्डाः प्रवर्तन्ते विहितमिति वधाः प्रवर्तन्ते तस्माद्विहितैनैवास्य तुष्टिस्तस्माद्विहितमाचरन्परिचरत्येवं वा । भक्तः सखा भूत्वा देवता सखायमिति परिचरति यथा वा मधुपचाराः सुस्वादा अस्वादा इति नोभयं विन्दन्ति स्वयं भुक्त्वापि सुस्वादमिति ज्ञात्वा तस्मै प्रयच्छत्येवं वा परिचरति देवताभक्तयोः सर्वेषु सम्बन्धेषु देवता आराध्याऽयमाराधको देवता उपास्याऽयमुपासकः स शास्ताऽयं शास्यः स फलदाताऽयं फलभोक्ता स पालकोऽयं पाल्यस्तस्माद्भक्तदेवतयोरनिर्वाच्याः सम्बन्धा यथा वा य इच्छति स तथा तं परिचरति तद्भक्तया परिचरणेन च प्रीणाति तस्मात्सर्वेभ्यो योगेभ्योऽयं गरीयान् भक्तियोगो य एवं वेद विद्वान्सोऽमृतत्वाय कल्पते ॥४९॥

वैतानिकमग्नीन्हुत्वा वैवाहिकं वा हुत्वा गृहस्थो ब्रह्मचारी समिधमाधाय ब्रह्मचारिभ्योऽन्तेवासिभ्यो ब्रह्मसंस्मृतिकं दद्यात् तेभ्यो वा ब्रह्मचारिकल्पेभ्यः स्नातेभ्यो ब्रह्मक्षत्रवैश्यानां तेऽपि पठेयुः यच्च. पठितं भवति तत्संस्मृतिकं दत्तं भवति तेभ्यो यदि दक्षिणां न गृह्णाति तेन ब्रह्मणा दत्तेन स्वर्गं लोकं जयति वा सेष्टा देवतां प्रीणाति ॥ ५० ॥

कथं वा गृह्णीयुरदत्त्वा दक्षिणां यत्क्षत्रवैश्यावेतावप्रतिग्रहीतारौ तस्माददत्त्वा नैतौ गृह्णीयातामिति प्रश्नोऽस्मिन्समाधीयते । यत्क्षत्रवैश्यावेतावन्नस्य नीरस्य वस्त्रस्याऽभयस्य कन्याया ब्राह्मणः प्रतिग्रहीतेतरौ क्षत्रवैश्यावदक्षिणस्यी ऋते कन्यायाः कन्यां सदक्षिणां गृह्णन्तीत्येके तस्मात्प्रतिगृह्णीयाताम् ॥ ५१ ॥

वा यदि प्रतिगृह्णीयात्तेभ्य एषा वृत्तिर्वै स्वर्गाऽऽपवर्ग्या च ॥ ५२ ॥

यद्ब्राह्मणोऽध्यापनयाजनयोर्दक्षिणाभिर्जीवति स केवलं तेजसा ह्येवात्मानं समनक्तीति विज्ञायते ॥ ५३ ॥

यदधीते ब्रह्मचारी ब्रह्मचारिकल्पो वा तेनाधीतेन स्वर्गं लोकं जयति लेष्टां वा प्रीणाति ॥ ५४ ॥

यद्ब्रह्मचारी भिक्षितेन गुरूच्छिष्टेन जीवति स केवलं ब्रह्मवर्चसेनैवात्मानं समनक्तीति विज्ञायते ॥ ५५ ॥

यद्ब्रह्मचारी वन्येतराश्रमवान्क्षत्रः पालनयुद्धाभ्यां जीवति स वर्चसेनैवात्मानं समनक्ति ॥ ५६ ॥

यद्ब्रह्मचारीतराश्रमवान् वैश्यो वृद्धिलाभाभ्यां जीवति सोऽप्येवम् ॥ ५७ ॥

यच्छूद्रः सेवाशिल्पाभ्यां जीवति सोऽप्येवमात्मानम् ॥ ५८ ॥

ब्राह्मणः सत्त्वेन तेजसा क्षत्रो राजसेन वैश्यो रजस्तमसोः शूद्रस्तामसेन ॥ ५९ ॥

यद्वन्यः शीर्णैः पर्णैः पुष्पैः फलैरद्भिरग्राम्यैर्वा वन्यैर्ऽन्यैर्ग्राम्यैर्वा जीवतीत्येके स आत्मानं ब्रह्मसदसि प्रतिष्ठितं कुरुते ॥ ६० ॥

यद्वन्योऽम्भसा वायुना जीवति स शुद्धेन विरजसा तेजसात्मानं समनक्ति ॥ ६१ ॥

**ब्रह्मचार्यधीतविद्यः कामार्तो वा स्नायात् व्रताशक्तश्च ॥ ६२ ॥**

**गृहस्थो विरक्तः कर्मनिष्ठो वनं निविशेत् ॥ ६३ ॥**

**वन्यः कर्मश्रान्तो ध्यानैकचित्तः संन्यासं निविशेत् ॥ ६४ ॥**

ततः क्षत्रवैश्यौ धनं धान्यं वस्त्रमौषधमुपकरणं यद्ब्राह्मणेभ्यः प्रयच्छेताम् ॥६५॥

विद्यातपोभ्यां संस्कारेण जन्मना यो ब्राह्मणः स सर्वेषां दानानां वनस्थसंन्यासेतरः सत्पात्रम् ॥ ६६ ॥

योऽपात्रे प्रयच्छति स नयत्यात्मानमधो योऽपात्रः प्रतिगृह्णाति स आत्मानं हिनस्ति तस्मान्नापात्राय दद्यान्नापात्रः प्रतिगृह्णीयात् ॥ ६७ ॥

यदि न धर्मेद्विगृहान्नन्वेषयन् जन्मना संस्कारेण विद्ययाऽऽरोग्येण सुवर्चसा सौन्दर्येण तपसा युक्तः पात्रं तदा जन्मना संस्कारेण विद्ययाऽऽरोग्येण युक्तः स्यात्तस्मै प्रयच्छेदयेनमपि तथा जन्मना संस्कारेण युक्तः स्यात्तस्मै प्रयच्छेदयेनमपि तथा जन्मना मात्रेण युक्तः स्यात्तस्मै प्रयच्छेत्तस्मान्नाब्राह्मणाय धर्मार्थं दानं प्रयच्छेत् ॥ ६८ ॥

एतानि वा धर्मार्थं दानान्येतानि यज्जलदानं यदौषधदानं यदन्नदानं यदनुलेपनदानं यद्वस्त्रदानं यदभयदानं यच्छय्यादानं **दानानि सर्वैः प्रतिग्राह्याणि सर्वो दद्यात्** यद्यान्यत्सुखकरं प्राणिनां तत्तदभिलाषिभ्यः प्राणिभ्यो दद्याद्येषां दानानां नितरां यदिच्छति तद्द्यात्तस्मै दत्वा सोऽश्नुते परं **तस्मादब्राह्मणाय दानमविधानं दद्याद्यस्मान्न प्रमाद्यति** ॥ ६९ ॥

**अब्राह्मणेभ्यो विधिना दानं न प्रयच्छेदधिकं च** ॥ ७० ॥

**आतृप्तेः प्रयच्छेदन्नं जलं यस्मै कस्मैचिद्यः कश्चित्** ॥ ७१ ॥

ततो गुर्वालयं व्रजेद्गुरुमभिवादयेद्यदि गुरुं न तत्र विन्देद्यत्र दृष्टपूर्वः स्याद्गुरुस्तं देशं प्रणमेत् ॥ ७२ ॥

यदि गुरुः शिष्यवत्सलः स्याच्चेन्मणिकुण्डले वस्त्रं छत्रं दारुमय्यौ चर्ममय्यौ वस्त्रमय्यौ वा पादुके दण्डः सौवर्णी मालिकाञ्जनशलाकोदपात्रमश्व ऐणेयं चर्म वैयाघ्रं वा एतेष्वन्यतमं विरोपभुक्तं तेन तस्मै शिष्याय दद्यात्स शिष्यस्तं शिरसा धार्यागारान्तरे स्थाप्य पूजयेत् ॥ ७३ ॥

**यद्ददाति गुरुस्तदेतद्गुरुप्रतीकं तस्मात्तत्पूजयेन्न तेन स्वयं भोगं कुर्वीत** ॥ ७४ ॥

*गन्धाक्षतपुष्पैरेव तत्पूजयेत्प्रणामेन च* ॥ ७५ ॥

अश्वस्त्वर्थवद्रुपचारैः पूज्यः ॥ ७६ ॥

**सर्वेषामभाव उत्तरा दिक् प्रतीकं तस्मात्तां वन्दयेत्** ॥ ७७ ॥

**सर्वेषां देवानामृषीणां गुरूणामीश्वरात्मनां जीवात्मनां परमात्मनश्च एषा वै दिगुत्तरा प्रतीकं तस्मात्तत्संपूजयेदभावे यं यष्टुमिच्छेत्तं तस्यां यजेत्** ॥ ७८ ॥

पारानन्दो वा राजन्यश्चतुरङ्गिण्या वा सेनया युक्तस्तुरङ्गमारुह्य मृगयायै निर्गच्छेदरण्यं प्रविशेद्यत्तपस्विभिः सेवितं स्याद्यत्र वा तेषां तपोवतां तपसा न त्यक्तहिंसत्वाः प्राणिनो जाताः स्युस्तस्मिन्नरण्ये ये हिंस्राः प्राणिनः स्युस्तान्प्राणैर्वियोजयेच्छस्त्रैर्नास्त्रैः ॥७९॥

ये मनुष्यान्हिंसन्ति त एव हिंस्रास्त एवागस्कारिणो यतो वा मनुष्यः सर्वेभ्यो जन्मभ्यः श्रेयानेतज्जन्मा पुरुष एव सर्वेषां जन्मनां सम्राडासीद्भविष्यति च सम्राड्वर्तते च भूतानां जन्मना भव्यानां च जन्मनां पर्यधितिष्ठत्येतत्पौरुषं जन्म **पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यममृतस्य** देवस्याप्येतत्पर्यवितिष्ठ**त्युतामृतत्वस्येशानो यदन्नेनातिरोहतीत्येतच्छन्दाज्जायते पुरुष एवैतेभ्यः सर्वेभ्यः श्रेयान्** यस्मात्पूर्वं ब्रह्मादिन एतमेव पौरुषं जन्म व्यदधुर्विभक्तं कुर्युर्यच्चातुर्वर्ण्यं ब्रह्म चैतदेव पर्यवतिष्ठति । किं तच्चातुर्वर्ण्यं पृथक् पृथग्यत्पुरुषं **व्यदधुः कतिधा**

व्यकल्पयन् । मुखं किमस्य कौ बाहू का ऽऊरू पादा उच्येते । उत्तमो ब्राह्मणो वर्णस्तदवर क्षत्रस्तदवरो वैश्यस्तदवर· शूद्रो ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽ अजायत इति शब्दात्पौरुषमेवातिरिच्यते सर्वेभ्यः ॥ ८० ॥

हिंसा पूर्वं व्याख्याता ॥ ८१ ॥

यदि तिर्यग्जन्मानमनागस धावन्तमेणादिक तिर्यग्जन्मा हिंसितु धावति यावत्त न हिनस्ति तावत्त हिंसक प्राणैर्वियोजयेदित्येतेन कर्मणा उभयोर्लोकयोर्जयति यत्त प्राणिन जीवन्त मोक्षयति तेनैहिक जयति यत्त क्रूर हिनस्ति तेन स्वर्गं जयति ॥ ८२ ॥

भक्ष्यस्यापि पशोः क्रूरस्य मृगयाया हतस्य मास नाश्नीयात्पारानन्दो यदि मासमश्नीयात्तदाय क्रूरवान् भवति तस्मान्नाश्नीयात्पारानन्दः ॥ ८३ ॥

हिंसस्य प्राणिन प्राश्नीयाद्भक्ष्यस्य मृगयाया हतस्य समर्प्येश्वरेष्वन्यतमाय पारानन्दोऽभक्ष्यो ग्राम्यसूकरस्तस्मादारण्यो भक्ष्य इत्यवगम्यत इत्युन्मत्तभैरवः ॥ ८४ ॥

एषा हिंस्राणा हिसा स्वर्ग्या वाऽऽपवर्ग्या वा तानेव वा हिस्रान्काल्यग्रे बलिदानविधिना बलिं समर्पयेत्काल्यै यत्काल्यग्रे प्राणिन छिनत्ति तेनापि स्वर्गं लोक जयति नापवर्गम् ॥ ८५ ॥

यदागस्कारिणं हिनस्ति पारानन्दस्तेनाय न प्रायश्चित्तीयत इति केचित् ॥ ८६ ॥

य काल्यग्रे हिंसितो भवति सोऽपि स्वर्गं लोक व्रजति यावन्त्यस्य रोमाणि भवन्ति तावन्ति सवत्सराणि काल्यग्रे हिंसित स्वर्गे प्रतितिष्ठति पारानन्दैर्यद्यन्यैस्तावन्त्ययनानि काल्यग्रेऽविधिनापि तावतो ऋतूनग्निष्टोमेऽपि तावत ॥ ८७ ॥

य पारानन्द काल्यग्रे यत्सख्याकाङ्गुलेन खड्गेन हिनस्ति तत्सख्याकानि सवत्सराणि स्वर्गे लोके प्रतितिष्ठति ॥ ८८ ॥

यन्मृगयाया हिंस्र प्राणिन हिनस्ति तदात्मान पापेभ्योऽवति द्विजान्वनस्थान्ग्राम्यान्पशूश्चैभिरवितैस्त्रीँल्लोकान्जयति यदात्मानमवति तदेन लोक जयति यद्द्विजान्वनस्थानवति तदामुष्मिक लोक जयति यद्ग्राम्यान्पशूनवति तद्भुवर्लोक जयति तस्मात्त जिघासीयात् ॥ ८९ ॥

य प्राणी मृगयाया हिंसितो भवति स मानुष सम्पद्यते ॥ ९० ॥

मध्याह्न आप्लुत्यापो वास परिधायाङ्कितो ब्रह्मयज्ञ निर्वर्तयेद्वने सन्यासिशूद्राभ्याम् ॥ ९१ ॥

देवानृषीन्पितॄश्च यज्ञसूत्री देवतीर्थेनर्षितीर्थेन पितृतीर्थेनोपवीती निवीती प्राचीनावीती तर्पयेत् ॥ ९२ ॥

ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि तद्यानि कल्पा गाथा नाराशंसीरितिहा-

सपुराणानि यद्वचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिरेवमेवर्षीन् पितृंश्च तर्पयति तस्मादेवं ब्रह्मयज्ञं कुर्वीत विद्वान्स **एष स्मृतियज्ञः** स एष **शब्दयज्ञः** स एष **ऋषियज्ञः** स एष **जपयज्ञः** स एषः **स्वाध्याययज्ञ** एतेषां यज्ञानामग्निष्टोमादीनां मूर्धन्येष विराजत एतेषामेव सम्राडपि वा ऋचं यजुः साम वा जपेदेतस्माद्यज्ञाः प्रवर्तन्ते एतस्माद्दानानि प्रवर्तन्ते दण्डाश्चैतस्मादेव प्रवर्तन्ते तस्मादेव **ब्रह्मयज्ञः सर्वेभ्यो गरीयान्** ॥९३॥

ततस्तर्पयित्वा गृहानेत्य यद्ब्राह्मणाय ददाति सा दक्षिणास्य वा यद्वभिस्तर्पयति सैवास्य दक्षिणा सम्पद्यते ॥ ९४ ॥

पवित्रं सुरभि स्वादुपाकमन्नं निष्पाद्य तद्धविर्यदग्नौ जुहोति स **देवयज्ञो** यद्ब्रा-ह्मणे जुहोति स एव बलिः स **भूतयज्ञो** यत्पितॄनुद्दिश्य ब्राह्मणपाणौ वाग्नौ जले पृथिव्यां वा हविरुत्सृजति स **पितृयज्ञो** यन्मनुष्यान्ददाति वाग्नौ मनुष्येभ्यो हन्तेति किंचिन्निक्षिपत्यन्नमयं **मनुष्ययज्ञः** सम्पद्यते। ततो गृहान्निष्क्रम्य चाण्डालपतितनास्तिक-रोगिगायसेभ्योऽनाथेभ्यश्च श्वभ्योऽन्नं जलं च भूमौ दत्त्वा तथा दद्याद्यथा ते सुस्वादु प्राप्नुयुर्न पांसुभिरवकीर्णं स्यात्तस्मिन्देशे दद्याद्यस्मिन्नुपभोक्तृनातपो वर्षा वातो वा शीतं न बाधेत ॥ गृहानेत्य पादौ हस्तौ मुखमद्भिः शुद्धाभिः प्रक्षाल्य समागतान् रोगिणो ब्रह्मक्षत्रवैश्यान्स-बन्धिनान्धनान्मित्राणि शूद्रांश्च समोजयन् बुभुक्षितान् स्वयं भुञ्जीत ॥ ९५ ॥

एवमेव वन्यो वन्यैः ॥ ९६ ॥

ब्रह्मचारिसंन्यासिनावन्येनान्नं पवित्रं गृहस्थवन्याभ्यां वा स्नातकविधुराभ्यां वा वर्णिभ्य आहृत्य भुञ्जीयाताम् ॥ ९७ ॥

**स्नातकस्य त्रयो वै यज्ञा ब्राह्मः पैत्रो मानुषः** ॥ ९८ ॥

भुक्त्वा कालीं कालीमन्त्रदीक्षिताः **समर्चयन्त्येके** ॥ ९९ ॥

तथैव **गाथामुदाहरन्ति** ॥ १०० ॥

उपवासप्रियास्त्वीशा ब्रह्मविष्णुशिवादयः।
उपवासेन भक्तानां क्रुद्धा भवति चण्डिका ॥
तस्माद्भुक्त्वा च पीत्वा च पूजयेत्कालिकाम्बिका**मिति** ॥ १ ॥

तथैतामपि **गाथामुदाहरन्ति** ॥ २ ॥

सांवत्सरिकं भोजनान्तं निर्वर्त्यास्य स्नातकः।
दीक्षितो वर्चयेत्कालीमयं नैत्यार्चनो **विधिरिति** ॥ ३ ॥

तथैतां **गाथामुदाहरन्ति** ॥ ४ ॥

दीर्घैः कुमारिका पूज्या एभिस्तामभिर्मनुनैः।
सुवासिनी भवेत्पूज्या वेश्या स्यात्कामिनाप**रैरिति** ॥ ५ ॥

एनां गाथामन्ययैके पाठयन्ति ॥ ६ ॥

चतुर्णामीश्वराणां तु भक्तैरर्च्यास्तु ब्राह्मणाः ।
सुवासिन्यस्तु वै शाक्तैरायुधैर्वैस्तु खादिरः ॥
आलङ्कारैस्तु तद्वर्णवर्णिताः पुष्पजातयः ।
वाहनीयैर्वृषाः पूज्याः किं वा तज्जातिसंयुताः ॥
कुमारिका महाविद्या भक्तिमद्भिस्तु पूज्यते ।
कालिकायै कुमारी वा गणिका वाथवा भवेत् ॥ ७ ॥

अर्चयित्वा शिष्टैरिष्टैः सार्कं स्वमतिभिरन्यमतिभिर्वा पुराणेतिहासान्वा शृण्वन्त आस-न्तस्तिष्ठेयुरास्तमयाद्वा देवतागाराणि परिभ्रमन्तः ॥ ८ ॥

सायंसन्ध्यां कृत्वाग्नीनग्निं वा परिचर्य भुक्त्वा नातितृप्ताः संविशेयुः ॥ ९ ॥

तत आयामादभ्यसनीयमभ्यसन्ति ॥ १० ॥

उत्तार्य यज्ञसूत्रं च यथासुखमनग्ना नग्ना वोपबर्हणकशिपुपूत्तराच्छादनीयैर्मञ्चे स्त्रीभिर्वा प्रजार्थं विहरन्त्वनग्नाः स्वपन्ति ॥ ११ ॥

**एष सांस्कारिकश्च क्रमो व्याख्यातः पारानन्दानाम्** ॥ १२ ॥

प्रातःस्मरणस्नानाङ्गानीति यामी चेत्सन्ध्यास्तुतिकवचपठनार्चनजपसहस्रनामपाठ-गुरुवन्दनान्येतानि कर्माणि दीक्षितानामकृतानि प्रत्यवायदान्येतेषां कर्माणां **दीक्षितानां मरणं गाढाज्ञानं वाऽनध्यायो नान्योऽनध्यायः सत्रदीक्षान्ता दीक्षा महारोगो वेति चतुर्मुखः** ॥ १३ ॥

**व्याध्याध्यन्यतरेणान्तःकरणास्वास्थ्यमनध्याय एतेषामित्यु-न्मत्तभैरवः** ॥ १४ ॥

**पञ्चानामकरणं प्रत्यवायदं कवचादीनामेतेषामनध्यायमीमांसा पूर्ववदिति महादेवः** ॥ १५ ॥

**अर्चनमन्त्रजपगुरुवन्दनान्येतानि नित्यान्येतेषामनध्यायमी-मांसा पूर्ववदिति शक्तिः** ॥ १६ ॥

**पारानन्दानां दीक्षितानां नित्यानि कृतान्यभ्युदयदान्यकृतानि चेत्प्रत्यवायो नेति जनार्दनः** ॥ १७ ॥

नित्यं कर्मद्वयं नृणां जपश्च गुरुवन्दनम् ।
दीक्षितानां परानन्दमते पुण्यफलोदय इति **भास्करः** ॥ १८ ॥

भूतशुद्ध्यादिवर्जनं स्वाराध्यत्वेनेश्वरभावनं स्वात्मनः पारानन्दत्वभावनं च पारा-नन्दानां दीक्षितानां नित्यमित्येकदन्तः ॥ १९ ॥

स्वयं स्वस्थः शुचिरव्यग्रमानसो व्याध्याध्यन्यतरेण शुचौ देशे काले स्वेष्टे स्वेष्टदिङ्मुखः

श्रद्धया युक्तो यथार्थचित्कृत्यं निर्वर्तयेद्भुक्त्वाऽभुक्त्वा वा भूस्थो वासनस्थो जलस्थो यानस्थो वा वायुस्थस्तेजस्थो वा सूर्योदयात्पुनः सूर्योदयो यावत्तावन्निर्वर्तयेदेकदा सुधीरित्युन्मत्त**भैरवः** ॥ २० ॥

आपत्तिश्चेत्तदिति **दिग्भैरवः** ॥ २१ ॥

वाम्युत्तरयोरित्याकाश**भैरवः** ॥ २२ ॥

कवचसहस्रनामपाठौ वैधमिति **कालभैरवः** ॥ २३ ॥

स्मार्तेन विधिना दक्षः समर्चयेत्ताम्रेण वाम्युभयोरन्यतरेणोत्तरः श्रौतेन विधिना सर्वे ॥ २४ ॥

वा स्मार्तेन ताम्रेण श्रौतेन स्वोपक्लृप्तेन नित्यं यः समर्चते सोऽचिरेणैव देवतां पश्यति श्रौतताम्रस्मार्तस्वोपक्लृप्तेषूत्तरोत्तरः कनीयान् ॥ २५ ॥

यथायथा नैत्यं निर्वर्तयति जीवस्तथातया सान्तं परिगृह्णाति ॥ २६ ॥

**प्रतीकं द्विधा दिव्यमदिव्यं च** ॥ २७ ॥

**सर्वभूतरुतज्ञाः सिद्धास्तदन्यथा ये ते त्वसिद्धाः** ॥ २८ ॥

सिद्धैः प्रतिष्ठापितं **दिव्यं** तदन्यैः प्रतिष्ठापित**मदिव्यम्** ॥ २९ ॥

उपल्काष्ठेषु पारानन्दोऽपि देवता पूजये**द्दिव्ये** ॥ ३० ॥

दिव्ये वाऽदिव्ये प्रतीके पारानन्द आवाहनविसर्जनाभ्यां रहितं पूजनं न कुर्यात् । कुर्वन्पापीयान्भवति पारानन्दश्च्युतश्च भवति । पारानन्दास्तस्मादावाहनविसर्जनाभ्यां रहितं पारानन्दः पूजनं न कुर्यात् ॥ ३१ ॥

यत्रैकस्मिन्बहवः पारानन्दाः पूजितारो भवन्ति तत्राप्यावाहनं विसर्जनं च पृथक् पृथक्कुर्युः ॥ ३२ ॥

यत्र बहवः पूजका भवन्ति पारानन्दास्तत्रैकेनावाहितः सर्वैरेवावाहितो भवत्येकेन विसर्जितः सर्वैरेव विसर्जितो भवतीत्युन्मत्त**भैरवः** ॥ ३३ ॥

कानिचित्प्रतीकान्यावाहितेषु देवतेषु तेषु पूज्यानि सम्पद्यन्ते विसर्जितेष्ववन्द्यानि कानिचिद्देवतानामावाहनात्प्राक् पश्चादपि विसर्जनात् वन्द्यानि पूज्यानीत्येवं बहुविधानि प्रतीकानि भवन्ति ॥ ३४ ॥

**निवेदको द्विविधः** ॥ ३५ ॥

**साधकः सिद्धश्च** ॥ ३६ ॥

स्वाद्वन्नाद्युपचारानिच्छति यैरहं देवतामुपचरिष्य इत्यत इच्छति स ततो देवतोपभुक्तमुच्छिष्टं भुङ्क्ते स **सिद्धः** ॥ ३७ ॥

मनसा स्वाद्वन्नादिकं स्वयं भोक्तुमिच्छति वाचा देवतार्थं वदति वा देवतालयं समाजोत्सवदर्शनार्थं व्रजति प्रसङ्गेन देवतां पश्यति वाचा देवतार्थं वदति कायेन

प्रणामान्विदधाति यथा वाचा वदामि कायेन करोमि तथाहं कदा स्यां ममानुरागः स्वदेवतायामिति मनसेच्छति तवानुरागो मयि सम्पद्यतामिति वाचा देवता प्रार्थ्यते येन स साधकोऽचिरेणैव सिद्ध सम्पद्यते ॥ ३८ ॥

एकस्या शालिग्राम-शिलायामेकस्या देवतायामावाहिताया विसर्जनात्प्राक् नान्यस्या देवताया आवाहनं पूजनं च जायते ॥ ३९ ॥

अर्चनेष्वन्यतमेन नित्यमर्चयेत् ॥ ४० ॥

**विशेषार्चनस्याकालं वक्ष्यामः** । सत्यं दैनदिनः प्रलयः खण्डप्रलयो महाप्रलयस्तत्रादौ तपोलोके द्वितीय ऐश्वरे लोके तृतीयेन कुत्रचित्सत्यं त्रेता द्वापर. कलिः सवत्सर इद्वत्सर इडावत्सर. परिवत्सरोऽनुवत्सर उत्तरायणाद्युत्तरायणान्त उत्तरायणं दक्षिणायनान्तो वसन्तादिर्ग्रीष्मान्तो वर्षादि. शरदन्तो हेमन्तादि. शिशिरान्तश्चैत्रान्तो वैशाखादिर्ज्येष्ठान्त आषाढादि श्रावणान्तो भाद्रपदादिराश्विनान्तः कार्तिकादिर्मार्गशीर्षान्तः पौषादिर्माघान्तः फाल्गुनादि शुक्लपक्षान्त. कृष्णपक्षादि. कृष्णपक्षे [स्कन्दस्य] षष्ठी **विघ्नेशस्य** चतुर्थीति **केचिदिच्छन्ति** नवमी **शक्तेर्दशमी विष्णोरेकादशी शिवस्य** द्वादशी **सूर्यस्य** सप्तमी **ब्रह्मणः** पर्व **सर्वेषां । कालिकायाः** कार्तिकयमा दशमी च एतेषु समर्चयन् एतदन्यतमे वा सर्वैरेवामीर्वैर्विशिष्टो भवति रोगनाशो रणजयो वस्त्रान्नपानहिरण्यधनलाभ आरोग्यप्राप्तिस्तरुणीनां सुन्दरीणामरण्याना प्रेमसम्पत्तिर्मैथुनाय **वाम्यौत्तरयोर्विशेषार्चनकालोऽयं** सम्भारसम्पत्तिः सर्वेषा देवताप्रतीकप्राप्तिरुत्तमतीर्थप्राप्तिर्गङ्गायमुनयोः सङ्गमः सुक्षेत्रप्राप्तिरुत्पातोपशमनं सतीर्थ्याना समताना समार्गाणा सवर्णाना सगोत्राणां ससंस्कारसूत्राणा सवेदाना सोपजीविकाना सदवतैरेव यथाविधान वा विशेषार्चना निवेश्य प्रेम्णा समागमसम्पत्तिर्ग्रहण चन्द्रसूर्ययो । सूर्यग्रहणाच्चन्द्रग्रहण विशिष्यते । **विशेषार्चनं** प्रति यदा रुचिरुदेत्यादित्यवार **आदित्यस्य शिवस्य** सोमवारः **शक्तेर्मङ्गलवारो विष्णोर्बुधवारो ब्रह्मणो** बृहस्पतिवारो **गणेशस्य** शुक्रवारो **कपालिनः** शनिवारो **महाकाल्याथ** महारात्रं उष. **कौशिक्या** उदिते **ब्रह्मणः** सगव. **सूर्यस्य** मध्याह्नं **शिवस्यापराह्णे विघ्नेशस्य महाकाल्याथ** साय **विष्णोरनुदिते** महारात्राद्वर्ध्वं सर्वेषामित्येके **विशेषार्चनसम्भारसम्पत्तिः** सर्वेषामेके **विशेषार्चनस्य पर्वकालो व्याख्यातः** ॥ ४१ ॥

**विशेषार्चनं** वक्ष्याम ॥ ४२ ॥

नैत्यार्चनो विधिरेव विशेषार्चन । विशिष्टे कालेऽर्चन कृतं तत्कृतं तत्कृताकृतं तस्मात्**द्विशेषार्चनमिति केचित्** ॥ ४३ ॥

नैत्यार्चनाभिन्नं विशेषार्चनमित्येके ॥ ४४ ॥

**अथ शुचिः** कृतपूर्वेशाह्निय उदङ्मुखो यथेच्छदिङ्मुखो वा उत्कटाद्यन्यतमे

विशेषार्चनस्य समे शुचौ देशे सामयिकैः सममाचान्तो दीक्षाक्रमेण ज्येष्ठो ज्ञातविधिस्तदनु-सगनुलेपनः स्यात् ॥ ४५ ॥

स्ववर्णाश्रमाभ्यामपि श्रेष्ठः स्यादित्येके ॥ ४६ ॥

देवतामावाह्यासनं दत्त्वा प्रकल्प्य पाद्यादीनुपचारान्समर्प्यान्यैश्च मनोहरैः परिचर्य हविःप्रतिपत्तिं कृत्वाचान्ताः पुष्पाञ्जलिं दद्युः सोऽग्निमुखवत्परिचर्य परिचरेद्वा सुतं समण्ड-लमभ्यर्च्य प्रणम्य विसर्जयेत् ॥ ४७ ॥

विशेषार्चनेऽतोऽधिकेन विधिना यष्टुमिच्छन्नाम्नां सहस्रेण कालाग्नावेवैकामाहुतिं हुत्वा वा होनव्यं स्वाहान्तैः प्रणवादैश्चतुर्थ्यन्तमध्यैस्तैराहुतिसहस्रं जुहुयात् ॥ ४८ ॥

**विशेषार्चनं** ब्राह्मणान्याः कारयेयुर्ब्राह्मणेन दीक्षितेन हविःप्रतिपत्तिं पुष्पाञ्जलिं स्तवं नतिं स्वाराध्यत्वेन भावनं दासोऽस्मीति निवेदनं स्वतः कुर्युः **विप्रे मुख्यसाम-यिकत्वं तत्संभवति** तस्मिन्नेकेनापि नानुभवितव्यं क्षत्रेण वैश्येन शूद्रेण पूर्वं ब्रह्माणं विष्णुं देवतां पूर्वं विशेषार्चनेन विधिना यक्ष्यन्ब्राह्मणान् क्षत्रान्वैश्यान् शूद्रान्देवान् तिरश्चः सर्वानेतान्प्रकल्पयेत्सामयिकीति सर्वे विष्णुं देवतामावाहयन्तोऽभवन्सा देवता-ऽऽगता ते तामब्रुवन् गृहाणेदं गृहाणेदमिति स विष्णुस्तेभ्योऽकुप्यत् किं सर्वैरेवार्च्यते विशे-षार्चने एकेनार्चनेऽस्मिन्मुख्यसामयिकेन भवितव्यं तस्मान्नैतद्विशेषार्चनं यस्मान्नैको मुख्यः सामयिको भवद्भिः कृत इत्यमादाय तस्य विष्णोर्वचनं ते सर्वे भक्ताः संसारविरक्ताः सक्ताः पादाम्बुजे विष्णोः **श्रुतिभ्यां** ते खिन्नाः किमस्माभिरज्ञातविधिभिरिति तेऽब्रुवन् तान्हस-न्नेवाभ्युवाच विशेषार्चने मुख्यसामयिकं कृत्वैकं विशेषार्चने भवितव्यं तदनुकूलैर्यथावि-धानं यत्नेनार्च्यते स सर्वैरर्चितो भवति **तस्माद्वर्णाश्रमाभ्यां दीक्षाक्रमेण च विद्यया तपसा च युक्तं श्रेष्ठं मुख्यं सामयिकं कुर्याज्जन्मविद्यातप-आश्रमदीक्षाक्रमेण श्रेष्ठो भवत्येकेनोत्तरेण न्यूनोऽधमः पूर्वेण पूर्वे-णेत्येके । तदेतन्मुख्यसामयिकस्य मुख्यसामयिकत्वं** यन्नित्यार्चनान्यम-र्चनं विदधाति तद्विशेषार्चनं सम्पद्यत **इति विभेशो** विशिष्टे काले यत्क्रियते तत्तदिति **सूर्यो** विशिष्टेन संभारेण यत्क्रियते तत्तदिति **भैरवः** स मुख्यसामयिकैर्यत्क्रियते तत्त-त्सर्वेऽनुमन्यन्ते एषो वा तन्निरर्तयेदिति **शक्तिरनेनैः** कृतं विशिष्टे काले विशिष्टैः सम्भारैस्तत्तन्नित्यार्चनविशेषार्चनाभ्यामन्यद् यत्सामान्यार्चनमिति **चतुर्मुखो** विशेषार्चने समुख्यसामयिकाः समर्चयेयुरिति सर्वेऽनुमन्यन्ते तदेतन्मुख्यसामयिकस्य मुख्यसामयिकत्वं तेभ्य इत्युक्त्वा विरतो **विष्णुस्ते** ब्रह्माणं मुख्यसामयिकं कृत्वार्चयेयुर्विष्णुं तस्मान्न कंचि-दीश्वरमुख्यसामयिका विशेषार्चनेनार्चयिष्यन्तोऽर्चयेयुः ॥ ४९ ॥

आवाहनासनपाद्यार्घ्यस्नानालङ्काराद्येर्यद्दुपचरणं दक्षोऽन्यथेन्मयं मुद्रा स्तुति-करणं हविःस्वीकरणं मैथुनं रहसि शक्तिभिः सामयिकैः सभैः समामिर्विशेषार्चनं प्रवर्तते

तृत्यानन्दे मनुविमर्शनमग्नेरग्नीनामुत्सर्जनं प्रदक्षिणीकरणं पुष्पाञ्जलिनिवेदनं सर्वसुकृतंज-निवेदनं ध्यानानुसन्धानमपराधक्षमापनं दासोऽस्मीति निवेदनं सामीप्यसाक्षात्कारयाचनं सर्वैः कार्यं मण्डलार्चनं च विसर्जनं च मुख्यसामयिकेन ॥ ५० ॥

यथा वा कामयीत तथा सामयिकैर्बहुभिर्विशेषार्चनं विदधीत चेद्दक्षोऽन्यो मद्यै-र्मैथुनैश्च ॥ ५१ ॥

महता प्रयोगेणार्चनं कर्तुमिच्छन्नाम्नां सहस्रेणाभिषिञ्चेयथर्तुं शीतेन वारिणा कवो-ष्णेनोष्णेन ॥ ५२ ॥

ततोऽन्यं यदि वा महान्तं प्रयोगमिच्छेचेद्देवमभिषिच्य गन्धेनालिप्य तमेवं पुष्पै-रर्चनमक्षतैर्वेत्येके ॥ ५३ ॥

ततोऽन्यं वा महान्तमीहेचेत्पुष्पैरभ्यर्च्यैवं स्तुवीत ॥ ५४ ॥

ततोऽन्यं महान्तमिच्छेचेद्देवमेवमभ्यर्च्य स्तुत्वा कालाग्नावेवं हुत्वाऽऽयुधालङ्कारश-क्तिशस्त्रयायुधालङ्कारशक्तिवाहनालङ्कारेश्वरवाहनेश्वरवाहनालङ्कारेभ्यो मूलमन्त्रेण दिगग्नौ हुत्वा शतमीश्वरभक्तेभ्यो मूलमन्त्रेणाकाशाग्नौ दश हुत्वा समस्य पृथग्वा जुहुयात् यदि समस्य जुहुयादुत्तरयोरग्न्योरेकामेकाहुतिमित्येके वा स्रुचि तथा गृह्णीयादित्येके ॥ ५५ ॥

यदि कामयीत पशुनाहं यज इति गणेशाय मूषकमालभेत सूर्यायाश्वं विष्णवे शिखिनं शिवाय वृषभं शक्तये सिंहं व्याघ्रं हिंस्रं वा भैरवाय श्वानं ब्रह्मणे हंसं मनोहरं पक्षिणं वा ॥ ५६ ॥

**एतेभ्यो न स्यालभ्यत इति ब्रह्मवादिनो वदन्तीत्येकेऽब्रह्मवा-दिनः स्यपीति** ॥ ५७ ॥

आकाशाग्नेरुत्तरतो यूपं निवेद्य विशेषार्चनेन हुत्वा महताल्पेन वा प्रयोगेण वैष्णवं पशुं पीतेन शैवं श्वेतेन सौरं गाणपं शाक्तं च रक्तेन कापालं श्वेतेन कृष्णेन वा वारिणा प्रावपत्यमुकायै देवतायै त्वा जुष्टमाप्लावयामीत्याप्लाव्य तथैव रशनयाऽमुकायै देवतायै त्वा जुष्टं प्रतिबध्नामीति प्रतिबध्याऽमुकायै त्वा जुष्टं प्रोक्षामीति तथैव तेन वारिणा संप्रोक्ष्य तथैव तामिरद्भिरमुकायै देवतायै त्वा जुष्टं पाययामीति पाययित्वा आकाशाग्नेः पश्चात्पात्रा-ण्यासादयन्ति बर्हिषि दक्षिणे भागे दधिसर्पिषोः पात्रं दुग्धपात्रं सर्पिषः पात्र एतान् चष-कान् संस्थापितान्संप्रोक्ष्य संशोध्य चोल्मुकं परिगृह्य तस्मादग्नेस्त्रिरमुकायै देवतायै त्वा जुष्टं पर्यग्निकरोमीति पर्यग्निकृत्वोल्मुकं निर्ऋत्यां तेभ्यो निरस्यति ये वास्य विघ्नकर्तारो ये यास्योसिस्ले अनुधावन्ति परिपीडयन्ति परमार्थोपविष्टास्तेभ्य एवमुल्मुकं निरसामीति निर-सति मुख्यसामयिकः सोऽनुपद्रवः सम्पद्यते तस्मादेवं निरसेयदुल्मुकं निरसति तर्द्दिस्रः सम्पद्यते तस्मान्निरस्योपस्पृशेत्तस्यद्दर्णेन तिलकं कुर्यात्तस्य पशोर्मालेऽमुकायै देवतायै त्वा जुष्टं सतिलकं करोमीति मुख्यः सामयिक उदीचीं पश्यन्नुदनिष्टन् जुहुयादादधाय स्रुवेण स्रुचि

गृह्णाति प्रथमात्पात्रादमुकायै स्वा जुष्टं गृह्णामीति हविर्गृहीत्वाऽमुकायै देवतायै अयं पशुः स्नापितः स्वाहेति स्रुचा हुत्वा तस्मादेव पात्रात्तथैव गृहीत्वाऽमुकायै देवतायै अयं पशुर्बद्धः स्वाहेति हुत्वा द्वितीयात्पात्रात्तथैव गृहीत्वाऽमुकायै देवतायै अयं पशुः प्रोक्षितः स्वाहेति हुत्वा तस्मात्तथैव गृहीत्वाऽमुकायै देवतायै अयं पशुराप्यायितः स्वाहेति हुत्वा तृतीयात्पात्रात्तथैव गृहीत्वाऽमुकायै देवतायै अयं पशुः पर्यग्निकृतः स्वाहेति हुत्वा तस्मादेव पात्रात्तथैव गृहीत्वाऽमुकायै देवतायै अयं पशुश्छिन्नजिनः स्वाहेति हुत्वा शेषाणि हवींषि एकः सामयिकः स्रुवेण त्रयः सामयिकाः पात्रैरन्वाख्यान्यैः सामयिकैर्मुख्यसामयिकः स्रुचा विश्वेभ्यो देवेभ्यः स्विष्टकृद्भ्यः स्वाहेति तं पशुमुत्सृजन्ति ये वा तं पशुमुत्सृजन्त्यन्नजलदानैरभयदानेस्ते सर्वे व्रजन्त्युत्तमां गतिं साहस्रोऽपि राजा उत्सृष्टेभ्यः पशुभ्योऽन्नं जलं प्रयच्छन्नभयमुत्तमां गतिं जगाम। ये वा पशुमुत्सृजन्ति त आत्मनः पाप्मानं धुन्वन्ति येऽपि तत्सहायास्तेऽपि ये हवींष्यश्नन्ति त उत्तमां गतिं गमयन्त्यात्मानमेवं पशुं पशुन्वा समस्य पृथग्वोत्सृजेत् शिष्टा आहुतीः सर्वैर्हुत्वा शेषं समापयीत ॥ ५८ ॥

**एवं पशुयागं नाचरेद्विद्वान्परानन्दः ॥ ५९ ॥**

**एकदैवाचरेदित्येके ॥ ६० ॥**

सात्त्विको वै राजा एवं पशुयागैरयजत्तां देवता साऽब्रवीन्मां यष्टुमर्हेज्जडैरेव पदार्थैर्माजडैः चित्संवलितैर्यजस्व यस्माद्वा ध्याता चिद्रूपो ध्येयं चिद्रूपं ध्यानं जड एवं यजनं जडं यष्टा चिद्रूपो यजनीया चिद्रूपा एवं तपनतपस्वी तपनीया तस्माच्च एनं क्रमं व्युत्क्रमन्ति ते पापैर्युज्यन्ते तस्माज्जडैर्मायजस्व तस्मादेव ब्रह्मवादिनः **परानन्दाः** मद्यं हिंसं बलिं छित्वा रुधिरं जडं प्रयच्छन्ति ततोऽहं तुष्यामि तच्छिरोहोमजेन धूमेनाहं हृष्यामि तस्मादेवं यजस्वेत्युक्तो राजा वत्सवधैः परानन्दैः परानन्दो राजा तां कालीं यजञ्जीवन्मुक्तिं जगाम तस्मात्परानन्दो विद्वानेतन्नाचरेत् ॥ ६१ ॥

**अथ धामी महायागेन** यष्टुं कामयीत चेत् पादुकाजर्जं गायत्र्यैव पद्माहुतीस्तस्या देवताया जुहोति उन्मुकं निरस्य पात्राण्यासादयति प्रथमं पात्रं शुक्रशोणिताभ्यामापूर्य द्वितीयमासवेनतृतीयं मुद्रया सर्पिषा वा तदुत्पत्तिं वक्ष्यामः सुरूपामरोगां मञ्जुलमालिनीं यौवनोद्धतां सुगन्धतैलोन्मर्दनाभ्यां कवोष्णेनोष्णेन स्नापयित्वा वाऽर्द्धवतेन सूचेन मंत्रोक्त वस्त्राऽलङ्कारैः शोभितामानीय तस्या उपस्थेऽनन्तरगर्भौ प्रादेशमात्रौ कुशौ नाम्यग्रौ पाणिनाच्छाद्य तदुपस्थमन्त्रोचरातं जपन्कामबीजं चन्द्रबीजं खेट्देशबीजं यजस्या देवतायाः नामधेयं बीजं तदस्या नाम्नः प्रथमाक्षरमनुस्वारेण युक्तं बीजं तस्याः सम्पद्यते एष एकाक्षरो मन्त्र एतद्बीजं यस्मादेतदाकऽनेन देवतैषाऽऽकृष्टा भवति तस्मादेवं बीजमहेजस्या तया रहसि संगम्य शुक्रं योनावेवोत्सारयन् तथा मैथुनं कुर्वीत यथा तस्याः शोणितं पूर्वमुत्तरेतः शुक्रमुत्तार्य योनावेव मुच्यमानमिदिरोऽन्यो वा कुर्वीत यो दक्षः स्यात्ततो मैथुनरक्त-

ह्यीष्व गृह्णीष्वेति त्रिर्ब्रूयादुक्ते तेन मुख्यः सामयिकोऽन्यो वा स्रुवेण गृहीतुमुद्युक्तः सन्गृह्णामि-गृह्णामीति त्रिर्ब्रूयाद्यद्यन्यः सामयिकः स्यान्मुख्यः सामयिको गृहाणेति त्रिर्ब्रूयात्स्रुवं निधाय बर्हिषि पुनस्तेन स्रुवेणाज्यं पात्रे गृहीत्वा स्रुवं निधाय शुक्रं मध्यमाङ्गुल्योत्तार्य चषके तथैव शोणितमुत्तारयेत् । यदि पुमानदृढः स्यान्मैथुनेन शोणितमुद्धेदितुमसमर्थस्तस्मिन्नेव योनिमण्डले रक्तचन्दनं निक्षिप्य तदुत्तारयेद्यदि वा सा रजसा प्लुता स्याद्वस्त्रेण तद्रजो गृहीत्वा चषक उत्तार्याभिधारयेत् यदि वस्त्रं तज्जलेनाप्लाव्य तद्रक्तं जलं वा ॥ ६२ ॥

**एतयोरन्यतर औत्तरेयो विधिः ॥ ६३ ॥**

अमुकायै देवतायै स्वाहेति प्रथमायुधमुद्धैवं द्वितीयं तृतीयं चतुर्थं पञ्चमीं जुहोत्य-मुकशक्तिमल्लै देवतायै स्वाहेति षष्ठीममुकवाहनायै स्वाहेति षडाहुतयो भवन्ति शेषं पूर्ववत्

**यथार्चनं युक्तं मन्येत तथायुक्तोऽर्चयेत्सम्यकभक्तः स्वोपक्लृप्तेन विधिना यतो भक्तियोगः कारणं देवताह्लादाय तस्मात् ॥ ६४ ॥**

**आध्या व्याध्या वैपदस्वस्थो नित्यनिर्वर्तनं न निर्वर्तयेत् ॥६५॥**

**यथा युक्तो यावतीभिः शक्तिभिः कामयीत तावद्भिः सामयिकैः संभारैश्च पूजाभिः पूजयीत ॥ ६६ ॥**

सत्रेण यष्टुमीहन्महारात्रे उपस्युदिते वा सर्वैः स्वानीतैः संभारैरेकं प्रतीकं प्रतीकं पूजयन्ति आवाहनं विसर्जनं च तेषु सात्रिकेषु परस्परं वृतेषु एको मुख्यः सामयिको भवति स एव कुरुते सात्रिकाः सर्वे पृथक् पृथक् अन्यत्सर्वं कुर्युर्नेत्येके **सात्रिकाणां ये उपसामयिका भवन्ति विशेषार्चने यत्सामयिकाः कुर्वन्ति तदत्र सत्रे उपसामयिका आचरन्ति नोपसामयिकैर्विहीनं सत्रं भवतीत्येके** सर्वान्सर्वे वृणन्ति या युष्माकं उपास्या सा ममोपास्या यस्या यूयं उपासकास्तस्या अहमुपासकस्तस्मादहं युष्मान्सोपसामयिकान् सात्रिकानमून्वृण इति मुख्यसामयिकस्तान्वृत्वा ते पठन्ति वृता या तवोपास्या साऽस्माकमुपास्या यस्यास्त्वमुपासकस्तस्या देवताया वयमुपासकास्तस्माद्वयं त्वां सात्रिकं सोपसामयिकं मुख्यसामयिकं वृणुम इति मुख्यसामयिकं ते वृत्वा मुख्यसामयिको वृतः पठति यस्माद्यूयं सत्रं प्रारभथ तस्मादहं मुख्यः सामयिकः सोपसामयिको युष्माकं मुख्यसामयिकोऽहं मानुषः एवं ते सात्रिका वृता जपन्ति यस्मात्त्वं सत्रं प्रारभसि तस्माद्वयं ते सात्रिकाः सोपसामयिका वयं ते मानुषा इति वृत्वा प्रारभन्ति यावन्तीच्छेयुर्नैर्गुण्ययनानि यावतो ऋतून्मासान्पक्षान्दिवसान्प्रातरादिकालांस्तावत्सु पूजाभिर्निर्दिष्टास्तत्सत्रं यदेकोऽर्चक आवाहयति विसर्जयति चान्ये समर्चका भवन्ति यथादिष्टुता ये सामयिका उपसामयिकार्चनसन्निणो मुख्यसामयिकश्च सत्री न ते सांसर्गिकमैथुनं वा नित्यनिर्वर्तनं कुर्युर्न मूत्रमुत्सृजेयुर्न पुरीषं न निद्रां कुर्युर्न मिथुनीभूतास्त्रीभिरभिभवेयुर्न भक्षं भक्षयेयुर्न पानीयं पिबेयुरेतान्यन्यतममर्चने सत्री कृत्वा क्षमापनाय

देवतायाः पादौ हस्तौ मुखं प्रक्षाल्य द्विराचम्य देवतामूर्धन्यष्टावञ्जलीन्पुष्पाणां विकिरेदप्येकस्य पुष्पस्य वा हस्ताभ्यां पायुभ्यां नेत्राभ्यां यच्च किल्बिषं अक्षैश्च मनसा क्षुधा तृष्णया निद्रया जिह्वया दन्तैस्तत्सर्वं नुदामि पुष्पविकिरणैस्तस्मात्तत्सर्वं क्षमस्व क्षमस्व नमोनम इत्येतत्प्रायश्चित्तं । **प्रारब्धे सत्रे न प्रविशन्त्यन्ये इन्द्रियविकलाः कुरूपाश्चायुवानश्च भक्तिमन्तः प्रविशन्त्येके सत्रान्तर्गता न निर्गच्छन्ति ऋते आधिव्याधिभ्यामस्वास्थ्यादासमाप्तेः सत्रस्या-**काशाग्नौ एतामाहुतिं हुत्वा सत्रं मे समाप्तमभूत्समाप्तः कामो मे समाप्तिकर्त्रे नमोनमः सर्वं स्विष्टं सुहुतं सुयष्टं करोतु मध्ये ये विघ्नास्ते ये तेभ्यो निर्गच्छन्तु दूरं स्विष्टकृतेऽग्नये स्वाहेति सत्री सत्रान्निर्गच्छेत्तस्मिन् गते सत्रिणो जुह्वति दशान्यारब्धा अन्यैः । मुख्यः सामयिको वा स्विष्टं ह्येकेन न्यून बहुभिर्वा तत्स्विष्टं भवतु स्वाहेति हविर्मन्त्राशना **यामिनश्च** चेच्छक्तिमैथुनानन्दा जितेन्द्रिया मुण्डनाकारिणोऽस्नाना ईश्वरपरा मन्त्रजपपरा अर्थवदीश्वरोपचारपरा निराशिषो निरभिवादना निरालिङ्गना भगवच्चिह्नचिह्निता देवतोच्छिष्टामृतपरा भवेयुर्वा देवतां यष्टुमिच्छेयुस्तद्वय सवत्सरसंख्याते सामयिकैः शक्तिमिश्च ततोऽधिकैरधिकाभिश्च प्रारभ्यते सत्र न न्यूनैर्न्यूनाभिर्न **न्यूनाभिरित्येके अधिकाभिश्च सुरानन्दः** सत्रं प्रारभ्य देवता विसर्जयेदासत्रसमाप्तेरित्येतत्**सात्रो विधि**रेतत्सात्रा परात्मन ईश्वरात्मानो भवन्तीश्वरात्मनामैश्वरा जीवात्मानो ब्रह्मनादिनो भवन्ति सात्रिकाः ॥ ६७ ॥

यदि सत्रेऽपक्षीयेत मुख्यः सामयिकः सामयिकान्यतमः पूर्वंन्मुख्यसामयिकत्वेन वरणं यद्दुदककुम्भं निनयित्वा मार्जयन्स्वात्मानमेषोऽवभृथः ॥ ६८ ॥

समाप्ते सत्रे यावन्तः सात्रिका निषेधास्तेऽप्रतिषिद्धा भवन्ति ॥ ६९ ॥

**अथोत्सवविधिं वक्ष्यामः ॥ ७० ॥**

औत्सवेन विधिना देवता समर्चयन्सकल्प्यागाराणि चित्रितानि रञ्जितानि कारयेत् ॥ ७१ ॥

गजाश्ववेश्याभिरलङ्कृताभिः स्थिताभिरागारद्वाराण्यलङ्कृतानि कारयेत् । दुन्दुभ्यादिवाद्यैः स्तुतिघोषमुखैः सुगायकैः नग्नैः शिष्टोदितकार्यकरैः शूद्रैश्च द्वितीयकक्षाया स्वलङ्कृतैः शस्त्रोद्यतबाहुदण्डैः क्षत्रैः स्वलङ्कृतैः स्वलङ्कृताभिर्वेश्याभिर्यानेनोद्धताभिर्यजमानो ब्राह्मणैः कृतस्वस्त्ययनः कृतमुण्डनः कृताभ्यङ्गस्नानः स्वलङ्कृतो ब्राह्मण स्नातमकृतविवाहं सकृतब्रह्मचर्यं उत्सवार्थं ऋत्विजं वृणुते उत्सवार्थं ऋत्विज त्वा वृण इति । स वृतो जपेदीश्वरात्मैँस्तव दासोऽहमिति नवाक्षर महामनुं नव वा एते अर्णवास्तस्मादेष नवार्णवो यदीहेयं देवमर्चामस्तन्मनुमिति एतं जानीयाद्वा । ईश्वरस्य प्रथमैकवचनं संबुध्य तं चतुरक्षरं नामोहेक्षेयं पूर्ववत्तत्नवार्णवः सम्पद्यते । एष चतुष्पादो मन्त्रश्चतुष्पाद्धर्मस्तस्माच्च एनं वाचोचरति

स चतुष्पादं धर्ममेवात्मनि धत्ते । यदध्ययनं यजनं दानं दण्डश्चैते चत्वारो धर्मस्य पादा यच्चत्वारि वा एतस्य पदानि तच्चत्वार एव वर्गाः चत्वारो वा एते योगास्तस्माद्य एनं वाचोचरति स चतुरो वर्गान् योगानेवैवात्मन्धत्ते । एष वै सर्वसम्पादको मन्त्रस्तस्मादेष **चतुष्फलोऽयं चाण्डालेष्वप्युपदेश्यश्चाण्डालाच्चापि परिग्राह्यो** नास्य मन्त्रस्य दानादानाभ्यां गुरुशिष्यावुभौ सम्पद्येते तस्मान्महाफलोऽयमबन्धनो मन्त्रः यदस्य ग्रहणेच्छा साऽस्य दीक्षा यजपो मौनेन सा अहिंसा यस्य शिक्षा शुचिना वाऽशुचिना यत्र कुत्रचित्तत्पो भवति स धृतो जप्त्वैनं भवति । यजमानो नापितं शिष्यान्मुण्डयैनमिति । यद्यस्य मार्दवेन लोमानि युक्तानि स्युरस्य चेद्भ्रूयुगं पक्ष्मरोमाणि शिखां वर्जयन्सर्वगात्राणि मुण्डयेल्लोमानि पूर्वं श्मश्रूणि पश्चात्केशान्नखानि ततो मुण्ड एवं यजमानवत् स्नानादि सर्वदेवतायास्तदिष्टाया विशेषार्चनमारभेत । यजमानो जीवानर्थवत्परिचरेद्वस्त्रजलगन्धपुष्पमालाभिर्यथासम्भवं मानसत्कारैर्यथायोग्यं विशेषतो ब्राह्मणान्सुवासिनीः कुमारिकाश्च यामे यामे विशेषार्चनं कारयेत् वा सायं प्रातर्वा प्रातर्मध्याह्नसायंनिशीथेषु ॥ ७२ ॥

**वामी सर्वमुक्तवन्निभिर्मन्त्रैरर्चयेदित्येव विशेषः** ॥ ७३ ॥

**सर्वेऽधिकृता यतोऽतो दीक्षिता भगवदुच्छिष्टं वामिनः क्रमेण व्युत्क्रमेण वा यथेच्छं पिबन्ति भुञ्जन्ति विहरन्ति स्त्रीभिरन्योन्यं च** ॥ ७४ ॥

**वामानां च ग्रहणमन्त्राः** ॥ ७५ ॥

इदं पवित्रममृतं गृह्णामि भवभेषजम् ।
पशुपाशसमुच्छेदं कारणं भैरवोदितमित्याद्यस्य ॥ ७६ ॥

ईशोच्छिष्टामिमां मुद्रां हार्दसन्तापनाशिनीम् ।
गृह्णामि हर्षजननीं भोज्यसम्भारसम्भृतामिति **द्वितीयस्य** ॥ ७७ ॥

गृह्णामि प्रमदां दिव्यां प्रमत्तां यौवनान्विताम् ।
सर्वदानन्दहृदयां मत्साधनविधायिनीमिति **कामपद्व्यर्थपल्यन्यतराम्** ॥७८॥

गृहीत्वा मानसकृत्पुष्पाञ्जलीन्प्रक्षिपन्ति प्रक्षेपयन्ति वा देवताप्रतीके ॥ ७९ ॥

प्रत्यर्चनमावाहनविसर्जने स्यातां । **नेत्येके सन्नवत्** ॥ ८० ॥

उत्सवान्ते ऋत्विजं दक्षिणाभिस्तोषयेत् ॥ ८१ ॥

**अथ बलिदानविधिं वक्ष्यामः** ॥ ८२ ॥

**द्विविधं बलिदानम्** ॥ ८३ ॥

**छेदनमुत्सर्गः** ॥ ८४ ॥

**छेदनं** राज्ञा समर्थेन वा ॥ ८५ ॥

शस्त्रेण वध्या घातनीयास्त्वपराधिनः ॥ ८६ ॥

त्रयो वा एते लोकास्तेषु तिस्रो वा योनयस्तेषूत्तरोत्तरो ज्यायान्तासूत्तरोत्तरा ज्यायसी तस्मादेष मानुषो वध्यो देवतायै अपकरोति । यो मानुषो यथा पशव अपकरोतीत्येते वध्यास्तस्माद्बलौ वध्याः ॥ ८७ ॥

यस्माद्वा दण्डो धर्मपादस्तस्मादेतेन प्रचरन्ति **ब्रह्मवादिनः** सर्गस्य लोकस्य जित्यै ॥ ८८ ॥

ये वा तपसैव निगृह्णन्ति दण्डेन दण्डयन्तः प्राणिनस्त आनन्त्यमश्नुवन्ति **तापसा इत्येके** ॥ ८९ ॥

**हिंसा द्विविधा** ॥ ९० ॥

**उद्योगहिंसा प्रासङ्गिकी हिंसा च** ॥ ९१ ॥

प्राणिना वियोगाय देहेन कर्म कुरुते य**त्साद्या** ॥ ९२ ॥

तदितरा **द्वितीया** ॥ ९३ ॥

यथा वा यदग्नौ प्रक्षिपति काष्ठादिकं तदन्तर्गता जीवा हिंसिता भवन्ति । यदयं नेच्छति प्राणैर्वियोक्तुं तां न तत्प्राणैर्वियोक्तुं तान्कर्माचरति । कर्माचरन्नेव ते प्राणैर्वियुक्ता भवन्ति । तस्मादेषा प्रासङ्गिकी । तिष्ठता व्रजतासीनेन शयानेन द्वितीयया हिंसया पापं नाप्नोति नाभ्युदयं चेति **परानन्दः** ॥ ९४ ॥

तदितराया देवताया बलिदानादन्यत्र च हिंसन्पापमाप्नोति ॥ ९५ ॥

बलिं प्रयच्छन्हिंसान् शस्त्रेण हिंसन्नानन्त्यमश्नुत **इति सुरानन्दः** ॥ ९६ ॥

**अथ बलिदानविधिं वक्ष्यामः** ॥ ९७ ॥

स्नातोऽलङ्कृतो देवतामभ्यर्च्य देवतापुरतः पुरुषमितां भूमिमपहाय यथोदेशं वा तत्र गर्तं खनित्वा तैजसं तदितरं वा स्तम्भं स याचान्भूम्यूर्ध्वं स्यात्तावन्तमेव लोष्टैः काष्ठैरश्मभिः पङ्क्तिशाभिर्मृद्भिश्च तं संपूरयेद्यथा स स्तम्भश्चालितो न स्यादन्यत्र उत्खननात् ॥ ९८ ॥

शाणीयं रज्जुं दढामानीय तया बलिस्तम्भं संबध्य गन्धाक्षतपुष्पैश्चतुर्षु स्थानेषु स्तम्भमनेन हिंसस्य पशोर्देवसालोक्यायै गत्यै त्वामलंकुर्वे अयममृतस्य मृत्योर्भयं पलायते त्वमेनं सुस्थिरं कृधि अमृतेन यशसा दीप्त्या नियोजयेयमविह्वलं कुर्विति स्तम्भमलङ्कृत्य प्रणवैतं सुकृतस्य पन्थानमारोहयैनमिति रज्जुं गन्धाक्षतपुष्पैरलङ्कृत्य तया पुरुषं कण्ठे बध्वा प्रावितं संमुत्सृज्य **पशुहोमवद्धोमोऽत्र विशिष्टं** प्राणवियोगानन्तरं घातहोमोऽत्र कृताहुतो होमः स राजा प्राणैर्दण्ड्यान् वियोजयन्नमृतमश्नुते द्विपादाश्च चतुष्पादाश्च पशवः पशुं पुरुषमर्चनाविशिष्टेन गन्धेन यदेनं लिम्पति भाले शिरसि ग्रीवायां खड्गप्रहारणीये कण्ठकूपे हृदि बाह्वोरुदेनं बहिस्तः शुचिमेव कुरुते पुरुषं नग्नमार्द्रवाससं शुष्कवाससं वा प्राणैर्वियोजयेत्खड्गेन यस्मादयं योनेर्नग्नः पतितस्तस्मादेनं नग्नं छेदयेदिति **सुरानन्दो** यस्मादयं रुधिरेणार्द्रो निर्गच्छति तस्मादेनं क्लिन्नं छेदयेदि**त्युन्मादानन्दः** ।

शुष्कवासा ज्ञानमृच्छति तस्मादेन शुष्कवासस छेदयेदिति **ज्ञानानन्दोऽ**न्य पशुर्न-मस्छेद्यो न स्त्रीजातीयो बलिच्छेद कुत्रचित्तस्या शास्तिर्न शारीरिकीति **केचित् ।** स्त्रीजातीयो बलिच्छेदोऽस्त्येवेत्य**मृतानन्दो** गर्भिण्या अपि दुष्टाया **गर्भिण्यां विशेषं वक्ष्याम**स्ता छित्त्वा उदर प्रास्फोट्य खड्गेन स्वधितिना वा गर्भस्थान ज्ञात्वा गर्भं निष्कास्य स यदि गर्भो जीवेत्त जीवयेद्यदि शिरो ग्रीवया युक्त स्यात्त ग्रीवाया छित्त्वा सर्वं समान यदि स न तथा स्याच्छरावे त निधाय गोमयेनोपलिप्य गन्धाक्षतपुष्पैर्विकिरेद्दूर्वाभिश्चेयुमा-न्तनर दीर्घवितस्त्यायतमधिक वा यागीय काष्ठ पासुभिर्भूम्या प्रपूरयेद्गमयितु स्वर्गाय लोकायैनमुद्गमयितु खड्गधारा वाहयितु पूरयामीति पूरयेत् स्तम्भस्य पश्चात्तूष्णीं तमलङ्कृत्य अन्यया रज्ज्वा ग्रीवा तेन यज्ञकाष्ठेन सनद्ध्य बन्धयेद्यथा स खड्गप्रहारोऽन्यत्र मा भूया-देव बध्वा ता ग्रीवामभिमृशत्यचोलोकान्निर्नर्तयितु स्वर्गाय लोकाय गमयितु याम्यात्पाशा-द्विमोचयितु कृच्छ्राद्दुन्मोक्तुमभिमृशामि धर्मिणेति वरुणस्य पाशोऽसीति रज्जु चाभिमृश्य प्रथमो बलिर्द्वितीय स्तम्भस्तृतीया रज्जुश्चतुर्थं यागीयकाष्ठ पञ्चमी बन्धनरज्जु षष्ठ खड्ग सप्तम रक्तपात्रमष्टमोऽग्निर्हृदो भूमिर्वा नवमोऽह **इति** यथन्यश्छेदक स्यान्नवमोऽयमिति ब्राह्मणक्षत्रशूद्रान्यतम आप्तो नान्यश्छेत्ता भवति दशमीय देवतेति जपित्वा उदङ्मुख प्राङ्मुख प्रथम षष्ठेन सयोज्य पुष्प मूर्ध्नि न्यस्य चिरेण कालेन यद्गन्ता यदप्राप्यमयो-गिभि यद्गच्छन्ति सुकृतिनस्तच्छिन्नो गच्छ सत्त्वरमिति करणान्यद्भि सम्प्रोक्ष्याग्नेयो धर्मपाल-श्छेदयोग्यश्चेत्स एवान्यथान्यो लौह आनेयश्छेदयोग्य ॥ ९९ ॥

तिरश्चीनामि कनिष्ठिकानामिकामध्यमातर्जनीमिर्गणितो दीर्घ शताङ्गुल आयतो दशाङ्गुलैरेव धर्मपाललक्षणलक्षित एष **कालखड्गसंज्ञो** नास्मादधिक इष्यते ॥ १०० ॥ १४०० ॥

तदर्धायतस्तद्वद्दीर्घो **दिकखड्गः** ॥ १ ॥

त्रिंशदङ्गुलदीर्घ पञ्चविंशत्यङ्गुलदीर्घश्चतुर्विंशत्यङ्गुलदीर्घो वा त्र्यङ्गुलायतोऽयर्धाङ्गु-लमितस्तत्नीचैर्वा **आकाशखड्गोऽयं चन्द्रहासश्च** ॥ २ ॥

**द्वन्द्वत्वावधिरिच्छा यजमानस्य कारोर्वा** ॥ ३ ॥

रसरुत एकैक दशकमङ्गुलीनां लम्बत्वे न्यूनमुद्दिश्य **विजयोऽसिः खड्ग-स्तीक्ष्णधारो दुरासदः श्रीगर्भो विशसनो धर्मपाल इत्येते** क्रमशो व्याख्याता भवन्ति ॥ ४ ॥

मनोहरायतो मनोहरदीर्घो मनोहराकृतिर्यया सञ्ज्ञयाभियुक्तस्तया सञ्ज्ञया व्याख्यातो **भवतीत्येके** ॥ ५ ॥

अहि था कार्यं बलिदान छिन्दि छिन्दि बलिं स्वाहा स्वर्गाय लोकायास्य प्राणानु-त्क्रामयैन दु खित मा कृधीति खड्गमग्नौ निष्टप्यैन त्रिरुत्तरैस्त्रिभिरन्तरित रक्षोऽन्तरिता अरा-

तव **इति** निहतꣳ रक्षो निहता अरातय इति वायव्येनाग्नेयेन च तेजसा त्वां समनज्मीति निनीय तैरष्टभिर्धर्मान्नैर्नामभिः खड्गेऽष्टसु स्थानेषु गन्धाक्षतपुष्पाणि निक्षिपन्ति उभयत **इत्येके** द्विदष्टो द्विधाधारश्चेचतुस्त **इत्येके** ।

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव चेति ॥

एषो वै कालस्य प्रतीकं यत्खड्गस्तस्मादेतस्मिन्नर्चितेऽर्चितो भवति चिद्भिन्नो जडो जडभिन्नश्चैतन्यं सर्वेषां जडानामधिष्ठात्र्यो देवता भवन्ति देवता वै जीवास्तैस्तैर्योगैस्तत्तदधीश्वरत्वं प्राप्नुवन्ति यथा चाऽपां वरुणः । तत्खड्गं तत्सरौ धृत्वा अस्य स्वर्गाय लोकाय छिनद्मि एनं श्रीरामस्य देहं प्राणैर्वियोजयामि तीक्ष्णधारेण हुं फट् स्वाहेति सकृद्घातेन हस्ताभ्यां हस्तेन वा घातकश्छित्त्वा पात्रे रुधिरमानयेत् मुण्डं च तस्मिन् रक्तचन्दनं काश्मीरं घोदकं कर्पूरं दुग्धं दधि वा पुष्पं च निक्षिप्य हस्ताभ्यामाच्छाद्य **ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे** इत्यभिमन्त्र्य देवताग्रे निधाय कालीगायत्र्या तत्तद्गायत्र्या वा संपूज्य संबुद्ध्वेति वा समर्पयेत्समर्पणं जलोत्सर्गो दीपं मुण्डे प्रज्वालयेत्कर्पूरं वा चतुष्पादस्य लोका धूमप्रिया भवन्ति तस्मात्तेभ्यो धूमं निर्गमयेत् प्रज्वाल्यैवं तस्मिन्शान्त्ये ज्योतिषि आकाशाग्नी रुधिरं मुण्डं च वन्यभागेभ्यो रुधिरमुण्डादिदेवतोच्छिष्टभागेभ्यो य ईश्वरार्थं दीक्षिता जीवात्मानस्तेभ्यो यदर्थं दीक्षिता ईश्वरास्तेभ्यः स्वाहेति हुत्वा रुधिरतिलकी स्यात् यो वै एतत् रुधिरतिलकी स्यात्स देवतामेव वशीकुरुते या स्वेष्टं तस्मात्तिलकी स्यात् तच्छरीरं गर्ते निधाय पांसुभिः संपूर्याज्ञातामिव भूमिं कुर्यात्तस्यां मन्त्रं जपति स सिद्धमन्त्रः सम्पद्यते वा तच्छरीरं ग्रामादुत्तरतस्त्यजेद्वा सायं श्मशानभैरवाय स्वाहेति एकामाज्याहुतिं हुत्वा एकधेदग्निः, अग्निरयं चेदेतामेव निम्नाग्निषु होमशेषं समाप्य च काष्ठैः पुरुषकबन्धं चेपुरुषचितां पशोश्चैनत्सुचितां कृत्वाऽग्निनाऽग्निभिर्वा दग्ध्वा तद्धूमतो धूमेन देवतादर्शनीयः सम्पद्यते सदैव धूमेन स्वर्गं लोकमेति देदीप्यमानस्याग्नेराऽऽङ्गण्यत्वं प्रदेशे जपन्मन्त्रं सिद्धः सम्पद्यते सोऽग्निर्वदोषशाम्येत्तद्दाग्निं पुनः प्रणीय दहेदेवमाहूतौ **यावत्तत्कर्म स्यात्तावत्पूजाविरामो न विसर्जनं नियमाश्चैते भवन्ति यजमानस्य** खट्वाशनं स्त्रीसङ्गवर्जनं मूत्रपुरीषोत्सर्गयोः स्नानं निद्रायामाचमनं अशुचिस्पर्शने स्नानं **एते नियमाः ऋत्विक्‌णामपि भवन्ति** यद्येतेन विधिना मौनं स्नानं स्यात्तस्माद्वा सर्वे यजमानाः सर्वे ऋत्विज इत्यस्मिन्नवशेषे भस्मनि शान्तेऽग्नावस्थीन्यादाय पुनः श्वेनाद्भिः प्रणीय तान्यस्थीनि दुग्धेन तद्भूपजाभ्यां दध्ना वा संसिच्य पिण्डं कृत्वा मधुनाज्येन गोधूमपिष्टेन वा माषपिष्टेन वा संमिश्र्य पिण्डं यज्ञेनाविश्य तेनाग्निना दग्ध्वा यथाऽस्थीन्यवशिष्टानि स्युः पुनरेवं भस्मनाशपर्यन्ते शान्ते भस्मनि श्मशानकालिकोपासको भस्म तत्तद्दुस्थानेषु धारयेद्विजितलोकश्च ये खल्वेऽपि धारयेयुः मन्त्रज्ञो देवतासम्पर्कं निर्वर्तयेत् अग्निदान-

विधिर्वा तच्चर्मणो योगेन भोगं कुर्वीतेत्याकाशभैरवो यथाकथञ्चित्खड्गेन यद्विसाम्हि-नस्ति स्वापराधकान्त्या तत्कालिकेयो बलिः सम्पद्यत इत्युन्मत्तभैरवो वा यथाकथंचि-त्खड्गेन देवतापुरतश्छेदयेद्बलिं **एष बलिदानविधिः** ॥ ६ ॥

**अथ देवताप्रतिष्ठां वक्ष्यामः** ॥ ७ ॥

अश्मभिः सुधया च देवतालयं सम्पाद्य देवताप्रतीकं अश्ममयं तैजसं वा ब्राह्म-णेभ्यः स्वस्ति वाचयित्वा वास्तुदेवताभ्यश्च हुत्वा **दाक्षिणो** दुग्धेन प्रतीकं यदवयवक-रणे वैहैष्ट्वेश्च शिल्पिभिः कृता तस्मादेतस्मान्निर्हरामि दोषं दुग्धेन शांतेनाप्याययामि शुचिं च तेजसा समञ्जयामीति प्रक्षाल्येदेवमाभरणायुधवाहनशक्तिप्रतीकानि तस्याधै-तानि **वामी** चेदाद्येन शोधितेनाद्येन दुग्धोत्तरत ऊहेदित्युन्मत्तभैरवो दुग्धस्थान **इत्याकाशभैरवः** स्थितान्यासीनानि वाहनासीनानि वा प्रतिष्ठापयेत्प्रतिष्ठितायां देवताद-क्षिणतोऽन्यत्रहितं वाहनं वा मुख देवतायाः शक्तिर्देवतावामतो दक्षमुखी तस्या वामतो वाहनं देवतावाहनमुखमेव भवति स्थिरा प्रतिष्ठा यदि कामयीन स्थिरा चिराय प्रतिमां प्रतिष्ठापयामि न्यसामीति वा सुधया वान्येन प्रकारेण न्यसेद्यया न चलिता स्यात्सान्यथानि मनोहराणि तत्तद्ध्यानलक्ष्माणि स्थिरप्रतिष्ठाप्यानि भवन्ति नो इतराणि प्रतीकानि भवन्ति चरप्रतिष्ठाप्येवं विशेषस्तु चरा चिराय प्रतिष्ठापयामि न्यसामीति यासने न्यस्यैषा चरा भवति विशेषार्चनेनार्चयित्वाग्नीनग्निं वा प्रणीय हुत्वा पृथ्वीभ्यः स्वाहा अद्भ्यः स्वाहा तेजोभ्यः स्वाहा वायुभ्यः स्वाहा दिग्भ्यः स्वाहा कालेभ्यः स्वाहा आकाशेभ्यः स्वाहा स्थिरायै प्रतिष्ठायै स्वाहेति स्थिरायां चरायै प्रतिष्ठायै स्वाहेति चराया यावन्ति प्रतीकानि भवन्ति पृथक् पृथक् तावन्तः प्रतिष्ठाहोमा भवन्ति होमशेषं समाप्य पारानन्दोऽर्चनान्ते देवता समण्डलां निसर्जयेत्**प्रती-कानि द्विविधानि भवन्ति प्रतिष्ठया प्रतिष्ठापितानि विसर्जितदेवता-कान्यपि पूज्यानि** वन्यानि सन्तिष्ठन्त्येव तानि विमुतावाहितदेवताकानि सम्पूज्यानि वन्यानि भवन्तीति शालिग्रामशिलादिषु न प्रतिष्ठा व्यक्तावयवा कृता चेद्यथाप्यानं शालिग्राम-शिला तस्याः **प्रतिष्ठेत्येके** प्रतिष्ठापितधर्मा भवन्ति शालिग्रामशिलादिषु पार्थिव्यादिषु कृतासु प्रतिमासु अप्रतिष्ठापितासु आवाहिता देवता चेतानि वन्यानि पूज्यानि सम्पद्यन्ते तानि निम-र्जितदेवताकानि अवन्द्यानि अपूज्यानि सम्पद्यन्ते न पुनस्तत्रावाहनयोग्यत्वमित्येके देवतागा-रस्य त्रीणि द्वाराणि भवन्ति पुरस्ताद्दक्षिणत उत्तरतस्तेषामग्रत- सभाम्यथानि भवन्ति गह-रसहस्तामितः सर्वतो देवतागारगर्भो भवति द्विगुणानि सभाम्यठानि भवन्ति तदर्धस्तदर्धस-दर्धतो यथानंभं वा तत्परित- परिष्यगाराणि नाभतोऽवच्छिन्नान्येक स्थन्ति । **अथ कृताकृतं** देवतागारपरितः पुनः साम्रखरवीरपनशोदुम्बरनिम्बाशवथाधपर्णादिराद्या-म्रुभान्यद्तो रोदमेधपार्सभं तडागान्पर्याणूश्च खानयेत् प्रवृद्धोद्वृतवसभवारापन्दी-गाविपिरमदंसदग्नानां च यागाय यथायोग्या. शाला रम्याः कारयेत् दग्नानामर्पाय औद-

धादि वितरेयं तं तत्र तथा प्रकल्पयन्ति एवं तत्तदर्थिभ्यस्तत्तदातॄन् एतद्रक्षार्थं शोधनार्थं संमार्जनादिभिः शूद्रांश्च प्रकल्पयेदन्नाच्छादनदानाद्यैर्भूत्वानेतस्य सर्वस्य परितो देवतागारस्य सिद्धये दृढकुड्यविशेषं प्रकल्पयन्ति वास्तुशास्त्राद्विशेषोऽनुगन्तव्यो मनोहरत्वादिर्भूमिपरीक्षणादिर्बलिदानैः प्रचरन्ति ब्राह्मणभोजनैः सहस्रनामहोमैः स्वाहान्तैर्नामभिर्महद्भिरुरुसवै रुधिरहोमैरिति कृताकृतं निःशक्तिकां निर्वाह्नां प्रतिमां प्रतिष्ठापयेदि**त्युन्मत्तभैरवो** निरायुधामिति **ज्ञानानन्दो ब्राह्मण** एव प्रतिष्ठया प्रतिष्ठापयेन्न क्षत्रादि**रित्येके** एवं प्रतिष्ठापयति वा यथाकथञ्चित्सोऽश्नुत आनन्त्यं ऋतेऽवयवभ्रंशाद्देवताप्रतीकं न वैकिकं सम्पद्यते **इत्युन्मादानन्दो** वैकिके तस्मिञ्जाते सति पुरुषद्वयमितां खनित्वा भूमिं तस्यां तं निक्षिप्य पांसुभिः पूरयित्वा तां भूमिं यथायोग्यां प्रकल्पयन्ति देवतागारे पुनः प्रतिष्ठया प्रतिष्ठापयेद्द्वितीयं प्रतीकमागारं च जीर्णं नवमिव प्रकल्पयन्ति वास्तुहोमेन च प्रचरन्ति ॥ ८ ॥

इति पारानन्दसूत्रे उत्तराध्याये प्रथमाह्निकम् ॥

# पारानन्दसूत्रे द्वितीयाह्निकम् ।

**अथ देवताप्रसादसिद्ध्येऽनुष्ठानक्रमं वक्ष्यामः ॥ ९ ॥**

संवत्सरमयनं ऋतुं मासं पक्षं दिवा नक्तं वानुतिष्ठेत् ॥ १० ॥

ब्राह्मणैः पुण्याहं वाचयित्वा दीक्षाधर्मानङ्गीकृत्य स्नानवर्जं यथापक्षं एकदार्चनमित्यनुष्ठानं **दक्षी** मध्याह्ने **वामी** निशीथे वा प्रातर्**दक्षी** सायं **वामी** वोभयोरन्यतर**मौत्तरः** ॥ ११ ॥

य एनं विदधाति संवत्सरं स देवता पश्यति स देवता पश्यति तथा भूत्वा दक्षी मध्याह्ने जुहुयादाहुतीनां सहस्रं वा नाम्नां सहस्रस्यैकमेकं शतं नाम्नां पृथक् पृथक् स्वाहान्तैर्नामभिर्ब्राह्मणान्दश मधुपर्केणार्हयित्वकेनकेन हावयेत् । अवदानधर्मेणादाय चरुं वलीनां रुधिरं वा आज्येनानवदानेन दुग्धेन दध्ना वोक्तवद्विकल्पं कालस्य ॥ १२ ॥

य एवं विदधात्ययनं स देवता पश्यति स देवता पश्यति ॥ १३ ॥

तथा भूत्वोक्तनत्काले पारानन्दैश्छेद्यान्वलीन् छेदयेत् ॥ १४ ॥

ऋतुं य एवं विदधाति स देवता पश्यति स देवता पश्यति ॥ १५ ॥

वा विद्वान् स्वगात्ररुधिरं दद्यात् ब्राह्मणो न दद्या**दित्येके** ब्राह्मणोऽपि दद्या**दित्युन्मत्तभैरवः** ॥ १६ ॥

ब्राह्मणः शिरसो हृदयस्य वा क्षत्रियो बाह्वोः कण्ठस्य वा वैश्य ऊर्वोरुदरस्य वा ललाटस्य शूद्रोऽसृग् दद्याद्बलिदानविधिना वा मार्जयेत्स्वगात्ररुधिरेण देवताप्रतीकं वा नैवेद्यनिवेदने रुधिरं निष्कास्य द्विराचामेत् स्वधितिमवलम्ब्य दक्षिणहस्तेन स्वधितिरसि देवानां त्राता असि वनानां छेत्ता असि रुधिरपोऽसि प्रियकृद्देवानां धर्मपोऽसि यथा वा उच्छिष्टं वत्सस्य स्तन्यं तस्मात्पयस्तद्देवता गृह्णन्ति एवं त्वदुच्छिष्टं रुधिरं देवतास्तस्मात्स्वधिते मा मा हिंसीरिति स्वधितिं गृहीत्वा वामेन पाणिना तृणं दूर्वां वा गृहीत्वा अमृतमसि सोमोऽस्याप्यायितासि देवानामोषधे त्रायस्व मामिति तृणान्तर्हितां त्वचं **कृत्वा हुंफडिति** रुधिरं निष्कास्य पात्रे ईषच्चैतज्जलेन संमिश्र्य सावित्र्या गायत्र्याऽभ्युक्ष्याभ्युक्ष्य तद्विनियोजयेदित्येष **स्वगात्रासृग्बलिविधिः** ॥ १७ ॥

**वामी** स्त्रियमभिमृशति स्त्रीरसि देवतानां प्रेयस्यसि श्रीरसि यूनां अरणिरसि मनुष्याणामिति तां दृढमालिङ्ग्य सचुम्ब्य च मुखं स्वीयमुत्थितलिङ्गं नवनीतेनालिप्य भगं निर्मन्थेद् यदि वा सा पूर्वं स्रवेत् रजसा वा उद्रिक्ता स्यात् तदा तत्रैव स्वीयमपि वीजमुत्सारयेत् । आचान्तः शुचिर्भगं गन्धाक्षतपुष्पैरभ्यर्च्य तस्माद्दर्व्या पात्रस्थे घृते निष्कास्य तद्घृतेनापूर्य स्थण्डिले देवताप्रतीकामनो रमिति वह्निं प्रदीप्य वलिरसि देवतानामिति वह्नौ निनयेत् ॥ १८ ॥

देवता विसर्जयित्वा च विरमेत् ॥ १९ ॥

देवता समभ्यर्च्य पुष्पैर्नाम्ना सहस्रेण शतेन दशभिर्वार्चयेत् ॥ २० ॥

मास य एव० ॥ २१ ॥

यस्या यद्गन्ध तद्गायत्र्या तत्प्रतीक तेन गन्धेन विलिम्पेत् । शेषमुक्तवत् ॥२२॥

पक्ष य एव० ॥ २३ ॥

प्रात स्मरण तस्या यस्या उपासका भवन्ति । शेषमुक्तवत् । दिना य एव० ॥२४॥

अङ्गन कवचावृत्तिश्चागमोक्तसख्यानत् ॥ २५ ॥

नक्त य एव० ॥ २६ ॥

**अनुष्ठानोत्सर्गस्नानम्** ॥ २७ ॥

अनुष्ठाना ते ब्राह्मणीभ्यो जीवपत्यीभ्यो जीवप्रजाभ्य ब्राह्मणेभ्यो विद्वद्भ्यस्तत्पतिभ्य कुमारिकाभ्य आदशवर्षा कुमारिकाणा कुमारित्वमाप्तुमभिलाषाद्वा । वस्त्रालङ्काराम्बुघटोपानच्छत्रादर्शमृदुशैय्यागृहारामवापीकूपतडागान्नानि च प्रयच्छेत् ॥ २८ ॥

**वामानुष्ठानान्ते** कालिकेयस्य वेश्याभ्यश्चैवम् ॥ २९ ॥

यथासभवमुक्तेभ्यो यथासभव दानम् ॥ ३० ॥

**सौरान्ते** ब्रह्मचारिभ्य । **वैष्णवान्ते** गृहस्थेभ्य । **शैवान्ते** गृहस्थेभ्यो **वैष्णवान्ते** वनस्थेभ्यश्चेत्येके ॥ ३१ ॥

**गाणपान्ते** गृहस्थेभ्य **शैवान्ते** सन्यासिभ्य **इत्येके शाक्तान्ते** स्नातकेभ्य अकृतविवाहेभ्योऽन्न सत्कारपूर्वक दद्यादनुष्ठानकृन्नादत्तान्न स्यात्**सर्वेषां** स्नातकोऽकृतविवाहो भवति तस्मात्सर्वान्ते तेषा तेषामसभवे तस्मै दद्यात् । यदमुण्डित मुण्डयति, यदसस्कृतशरीराय सस्कारा प्रयच्छति, यदनाच्छादिताय वास प्रयच्छति, यत्स्नातायानुलेपन यदनुपानत्कायोपानहौ प्रयच्छति, यत्क्षुधितायान्न पिपासते पानीय प्रयच्छति, तदात्मनोऽनुष्ठान पूर्णमेव कुरुते । यथा यथा वा यस्य यस्य क्लेशा स्युस्ता तथा तथा च परेषा छेदयेत् । *यत्परेषा क्लेशाञ्छिनत्ति "तदय छिन्नक्लेश स्वय सम्पद्यते, तस्मात्तत्तदर्थिभ्यो* यथासभव दद्यात्तद्ब्रह्मचारिणे वस्त्रान्नवसूनि गृहस्थायागारवस्त्राभरणान्नवसूनि नागारवसूनीतरस्मै वसु ब्रह्मचारिण **इत्युक्तं तत्प्रत्युच्यत इत्येके** वनस्थयोग्यानि स्वादून्यारण्यानि भक्ष्याणि मृदून्यारण्याना पशूना चर्माणि । आरण्येभ्य पशुभ्यो भय ता हत्वा सन्यासिभ्योऽन्नवसे **एषोऽवभृथः सर्वेषाम्** ॥ ३२ ॥

तथाभूत्वोक्तकाले स्नान कुर्यात् ॥ ३३ ॥

सत्सर य एव विदधाति स देवता पश्यति स देवता पश्यति ॥ ३४ ॥

स्वगात्रेषु स्वेष्टदेवताचिह्नानि चिह्नयति मृत्तिकया येन वा तथाभूत्वोक्तवत् ॥ ३५ ॥

अयन य एव विदधाति० ॥ ३६ ॥

तथाभूत्वोक्तवत् दिव्यसहस्रनामपाठम् ॥ ३७ ॥

ऋतुं य एवं विदधाति० ॥ ३८ ॥

जपं संख्याकमनुवर्णाना वा देवतावयःसंवत्सरसंख्यया यथा वा मूर्तिः प्रतिष्ठाप्या देवतावयःसंवत्सरसंख्या तत्सख्या वितस्तिभिर्भवति । दीर्घा वेष्टमानेनैवं जपो भवति । इष्टसंख्याको या तद्वय'संवत्सरसंख्यया सहस्राणि स्ववय.संवत्सरसंख्यालक्षान् जप जपति । **एतस्यान्ते अभिषेको मार्जनं गन्धानुलेपः पुष्पाणि होमो ब्राह्मण-भोजनं तर्पणमित्येतानि समाङ्गानि भवन्ति** तान्येतस्य पूरकाणि भवन्ति । तद्गायत्र्या सर्वाणि निर्वर्तयेदित्येके ॥ ३९ ॥

सतस्वङ्गेषु ईषदीपदर्शं स्वयं निर्वर्तयेद्ब्राह्मणैः शिष्टम् ॥ ४० ॥

जतेन मन्त्रेण सर्वाणि यदीच्छति तदा सर्वाणि स्वयमेव निर्वर्तयेत् ॥ ४१ ॥

स्वयमशक्तो गायत्र्यसंभवे तस्या देवताया मूलमन्त्रेण सर्वाणि निर्वर्तयेत् ॥ ४२ ॥

जपदशांशेनाभिषेकस्तद्दशांशेन मार्जन तद्दशांशेन गन्धानुलेपन तद्दशांशेन पुष्पाणि तद्दशांशेन होमस्तद्दशांशेन ब्राह्मणभोजन तद्दशांशेन तर्पणम् ॥ ४३ ॥

वा सर्वाणि जपदशांशेन भवन्ति ॥ ४४ ॥

अभिषिञ्चामीति मन्त्रमुक्त्वाद्भिरभिषेचनं प्रतीके ॥ ४५ ॥

मन्त्रमुक्त्वा मार्जयामीति मार्जन प्रतीके कुशैर्दूर्वाभिर्वा ॥ ४६ ॥

दर्व्याङ्गुल्या गन्धं मन्त्रमुक्त्वा गन्धेनानुलिम्पामीति लेपयेत्प्रतीके ॥ ४७ ॥

मन्त्रमुक्त्वा पुष्पेणार्हयामीति पुष्पार्पणं प्रतीके ॥ ४८ ॥

मन्त्रमुक्त्वा स्वाहेति जुहुयात् ॥ ४९ ॥

ब्राह्मणेषूपविष्टेषु तेषामग्रतः पात्रेषु सुसंस्कृतेषु अन्नेषु ब्राह्मणदक्षिणहस्ततले मन्त्र-मुक्त्वा यथडिलवदानधर्मेण स्रुचा हुत्वा वामहस्ततले स्रुवेण जल तूष्णीं हुत्वा ते च ब्राह्मणाः स्वीये स्वीये कमण्डलौ प्रक्षिपन्ति जलं जलपूर्णे एकमन्त्रं पात्रे गुरुवत्सु तेषु तान् गन्धपुष्पस्रक्स्रवैरर्चयेत् ॥ ५० ॥

दुग्धेन तीर्थोदकेन वा तर्पयन्ति दैवेन तीर्थेन जलं मन्त्रमुक्त्वा तर्पयामीति प्रया-वयन्ति ॥ ५१ ॥

सर्वाभि' सख्याभिः संख्यातानां जपानां शतेन सर्वाण्यङ्गानि निर्वर्तयेत्सहस्रेणे-त्येके ॥ ५२ ॥

दशांशत्वं भवेत्तावयावत्तेरत्वमेति च ।

एकत्वे समनुप्राप्ते तदाऽऽवर्तनमिष्यत इत्येके ॥ ५३ ॥

होमतर्पणमार्जनब्राह्मणभोजनमिति चतुरङ्गमिति दिग्भैरवः ॥ ५४ ॥

होमादि त्र्यङ्गमिति कालभैरवः ॥ ५५ ॥

मार्जनतर्पणाभ्यां **ह्यङ्गमित्याकाशभैरवः** ॥ ५६ ॥

प्राणायामान् दश वा तत्तद्द्वयःसंवत्सरसंख्याकान्कुर्यात् ॥ ५७ ॥

संवत्सरं य एवं विदधाति स देवतां पश्यति स देवता पश्यति ॥ ५८ ॥

ध्यानं कुर्यात् ॥ ५९ ॥

अयनं य एवं विदधाति स दे० ॥ ६० ॥

यथागमं दानानि दद्याद्ब्राह्मणेभ्यः ॥ ६१ ॥

ऋतुं य एवं विदधाति० ॥ ६२ ॥

**अथ कालिकायाश्च ब्रूमो वामतः** ॥ ६३ ॥

काल्यै सिन्दूरं रक्तचन्दनान्यतरं भाले दत्वा स्त्रियमानीय तया मैथुनं सम्पाद्यो-चलितशुक्रो लिङ्गं भगान्निष्काश्य पात्रे सजले शुक्रमुत्तार्य तत्सुगन्धिपुष्पैः प्रकीर्य यनपिष्टेन जपया रक्तचन्दनेन च आमिश्र्य पाणिनाच्छाद्य यत्त्वं तदहं यदहं तत्त्वमिति स्वयंभूपुष्पत-र्पितामीश्वरात्मानं परमात्मभक्ता जीवात्मोपास्या स्मशानवासिनीं तर्पयामीति जले स्थण्डिले वा कुशानास्तीर्य निनयेत् ॥ ६४ ॥

य एवं विदधाति० ॥ ६५ ॥

कृतान्यनुष्ठानानि न व्यर्थायन्ते देवताप्रसादसाधकानि भवन्ति वा स्वर्गदानि ॥ ६६ ॥

मुक्तकेशो दिगम्बरो रणे बाणमृत चक्रगदाखड्गशूलपरशुपाशाङ्कुशान्यतममृतं छिन्नशिरसमच्छिन्नशिरसं वा रणे युद्धेन मृतं वा सुरूपं युवानं **रणसंवृत्तात्पश्चदिन-मभिव्याप्य स्थितं शवमपर्युषितं भवतीत्येके । यावत्स्रवति रुधिरं तावत्तदपर्युषितमित्यन्ये** । प्रत्यक्शिरसं प्राक्शिरस दक्षिणपादमुदक्पादं वोर्ध्वमुखं पाणिना प्रेतं संस्पृश्यामिमन्त्रयते । प्रेतोऽसि प्रकर्षेणेतोऽस्माल्लोकाद्भय विद्यया बलेनौजसा पराक्रमेण श्रिया सत्त्वेनेति । तमधिरुह्य प्रजपन्मनु वा पठन्स्तोत्रं वा रणमृते चतुष्पादे उदङ्मुखेऽप्येवं । चिताङ्गालासमीपे वा प्रागस्थिसंचयनात्प्रशान्तवह्निके वा उच्छिन्नमनु-ष्मस्थितिकं यदालयं तच्छून्यालयमित्युच्यते । तस्मिन्वा व्याघ्रादिभयसंकुले वा शून्ग्रामो वा शिवारावान् य एवं वा विदधाति स कालीपुत्र इति ख्यातिं गच्छति । विद्यायां बृहस्प-तिरिव धनी धनाधिप इव बली वायुरिव दुर्जयो मृत्युरिव सम्पद्यते । पेयं भक्ष्यं तदुच्छि-ष्टमिति यो भुङ्क्ते स महेश इव योगीन्द्र. सर्वसिद्धीशः सम्पद्यते ॥ ६७ ॥

यः स्तोत्रैः स्तौति स घोराण्येनांसि तरति ॥ ६८ ॥

तरुणीमर्थपत्नीं कामपत्नीं वा धर्मपत्नीं वेति कश्चिदानीय रजस्वलां यस्मिन्वाऽहनि सुतं भवति रजस्तत्प्रथमोऽह्नः उदयं उदयात्मवितुस्तावदेव रजस्वला स्यात् स प्रथमाह्नो-र्चान्ते पात्रे जलदूर्वागन्धपुष्पाक्षतैः समिश्र्य सावित्र्या गायत्र्या चाभिमन्त्र्य तदुद्धृतेन तां प्रोक्षयति । यथा त्वं भगोऽसि भ्राजमानोऽसि रजसा एवं मां विद्यया वज्रसंहननेन बलेन

पराक्रमेण भ्राजमानं कृष्यमृतेन संप्रोक्ष्य सौवर्णेन दाम्ना सौवर्ण्या चार्धचन्द्रिकया गले करयोर्वलयाभ्यां कर्णयोः कुण्डलाभ्यां गन्धेन यथोद्देशं पुष्पैः पुष्पमाल्या चालंकृत्योत्तमास्तरणे पर्यङ्के तामूर्ध्वमुखीं नग्नां प्राक्शिरस्कां शाययित्वा दक्षे हस्ते दक्षं पादं वामे हस्ते वामं पादं तस्या दत्त्वा पुष्पसुगन्धतैलेन भगमालिप्य पुष्पैरवकीर्य एवं तस्या भगे पश्यन्तिष्ठन्प्राङ्मुखो नग्नो बद्धशिखः कृत्तकेशश्मश्रुलोमनखो विनाभ्रूयुगलोमभ्यो नेत्रपक्ष्मलोमभ्यश्च तद्रुधिरतिलकितो रक्तचन्दनतिलकितो वा स्रगनुलेपनो दशवारं कालीगायत्रीमन्त्रं वा तस्याः शतवारं सहस्रवारमेकवारं वा यथा कामयेत्तथा जपेदनुत्थितवीर्यः स्यापात्रान्तरे सजले वीर्यं गृहीत्वाऽनुत्थिते लिङ्गे तत्सजलं वीर्यं स्थण्डिल आर्द्रे तस्या भगे वा रतिः कामश्च तृप्यत्विति निनयेद्वस्त्राद्यैस्तां तोषयेच एवं विदधाति स सौन्दर्यवान्मदन इव भवति अपुनरावृत्तिं च सम्पद्यते ॥ ६९ ॥

तरुणीं रूपसम्पन्नामानीय तां स्नापयित्वा वस्त्राद्यैः सम्पूज्य सावित्र्या प्रोक्ष्य भगोऽसीति तां स्पृष्ट्वा सपवित्राभ्यां कराभ्यां भगमालभ्य अष्टोत्तरशतनाममूलमन्त्रान् जप्त्वा मैथुनं कुर्यादेव सर्वविद्येश्वरः सम्पद्यते ॥ ७० ॥

अष्टाभिर्योषाभिर्दिगम्बरो मुक्तशिखी मुण्डितमुण्डनीयः श्मश्रुकक्षलोमनखानि वा मुण्डितानि कृत्वागारं प्रविश्य सुगन्धप्रचुरं यथर्तुसुखदं प्रविश्य पूर्वादिदिक्षु ताः स्थापयेत्संस्थाप्योत्तरत एकां दक्षिणतश्चैकामेवं दश स्थापयेदित्येके । अपराजितायां दिशि विप्रमो श्रावकं त्वां वृण इति दक्षहस्तेन संस्पृशेत्स वदेद्वृतोऽस्मीति । तं मधुपर्केणार्हयित्वा ताश्च वस्त्रभोजनपेयैर्नैरयामिः स स्वेन ता भगलिङ्गसंयोगेन हासोपहासेन शक्त्यभावे ततस्तन्मण्डलं प्रविश्यासीन उदङ्मुखो गायत्रीं दशवारं जप्त्वा कालिकेया जप्त्वा तं वदेदेनां गायत्रीं त्रिरुपांशु त्रिरुच्चैः श्रावयेति । श्रावयिष्यामीति प्रतिवदेत्प्रियं कुर्यात्तस्मै सौवर्णी दक्षिणा कुण्डलेऽङ्गुलीयकं माला वा एवं कृत्वेचरः सम्पद्यते ॥ ७१ ॥

यदि योषिदसंसर्गः स्याच्चेद्रेतः समुत्तार्य येन केनाप्युपायेनोच्चारणकाले कालीबीजं जपेत् श्रावकः स्मशानकालिक इति श्रावयेदेवं जप्त्वा श्रुत्वा सत्कविः सम्पद्यते तच्छुक्रमुत्सारितस्थण्डिले आर्द्रे निनयेदुत्तरतस्तस्मै ताम्रमश्वं च दक्षिणा जलं च वस्त्रयुगं वा उपानद्युगं वा छत्रं वा ॥ ७२ ॥

नग्नाया उपरि योषायास्तरुण्याः सीरतेन विधिना रमयन्महाकालीति त्रिर्जप्त्वा त्रिः श्रावकाच्छ्रुत्वा खेचरोऽमितबलदार्ढ्यपराक्रमः सम्पद्यते ॥ ७३ ॥

पापमुक्तकामो ययास्यचित्सम्पादिते सुरते त्रिर्गायत्रीं जपेद्वा श्रावकाद्वाशगानि शिवे इति त्रिः शृणुयात्स सर्वपापविमुक्तः सम्पद्यते ॥ ७४ ॥

मधुगात्रेषु दुग्धेन सितया चोपपन्नं भक्तं चतुष्पथं गन्धपुष्पये कास्यै बलिर्निर्म

हरामीति रक्तचन्दनेन लाक्षारसेनोक्षित दत्त्वा तत्पश्चादुपविश्याष्टोत्तरशत जप्त्वा अदर्शन खेचरोऽमितगति सम्पद्यते ॥ ७५ ॥

जपान्ते पूजान्ते वा चमसापूरयति । प्रथम त्वा चमस देवतातर्पणाय जुष्ट लाक्षारसमाक्षिकाभ्या सपूरयामीति ताभ्या सपूर्योत्तरतो निदधाति । एव द्वितीय तृतीय चतुर्थं पञ्चम षष्ठ लाक्षारसमद्याभ्या लाक्षारसदुग्धाभ्या लाक्षारसेन सुरया दुग्धेन उद्दिश्य पूरयेत् षट् पात्राणि । तरुणीमरोगा वेश्यामानीय अनुलेपनोमर्दनाभ्या सस्त्रस्त स्नापयित्वाऽऽच्छाद्याऽलङ्कृत्य हास्यविनोदाभ्यां वाम रतिं चावाहयेदस्यै रतिमावाहय इति तस्या मूर्ध्नि रक्तपुष्प न्यसेत्कामाय काममावाहय इति । स्वमूर्ध्नि तदेव न्यस्य पाणिना नग्नाया भग परामृशति । भगस्य भगमसीत्येव वा लिङ्गस्य लिङ्गमसीति दढमुत्थित लिङ्ग भगस्याश्रयावस्थ इति शुचौ परामृश्य भगमालभ्य शोणितशुक्राभ्या शुक्राय योनिक्षालनतोयाय च त्वा जुष्ट निर्मशामीति भगे लिङ्ग निवेश्य सुरतोत्सव सम्पादयेद्यदि वाय शीघ्र द्रवेत्का तत्र **प्रायश्चित्तिरि**ति निष्कासयन् लिङ्ग रते शोणितमसीति लाक्षारसमभिमन्त्र्य भगे प्रक्षिपेदुत्तारिकाया नलिकाया तर्जन्या लिङ्गोपरि अङ्गुष्ठेनेव धृत्वा भगात्तदमृत गृहीत्वा सजले पात्रे तेन चतुर्थं पूरयेदुत्तारिकास्तेन सजलेन शुक्रेण पञ्चम भगक्षालनतोयेन षष्ठ पूरयति । परामभक्ता काली तर्पयामीति प्रथम निनयेत् । स्थण्डिले आस्तीर्णे कुशेषु प्रागग्रेषु उदगग्रेषु वा ईश्वरामान काली तर्पयामीति द्वितीय जीवामभजनायो काली तर्पयामीति तृतीय भगलिङ्गामृतप्रीता काली तर्पयामीति चतुर्थं शुक्रोत्सवा काली तर्पयामीति पञ्चम भगलिङ्गक्षालनतोयतृप्ता काली तर्पयामीति षष्ठ नि शेषान् सर्वान् सावशेषान् तत्पिपीपुर्जीवन्मुक्तो यदि क्रमशो गृह्णाति सत्त्वेन त्वा तेजसाऽमृतायाऽमृत सगृह्णामीति प्राश्नीयात्स्वप्ने तु दर्शन तस्या अर्धसिद्धिरुदाहृता । तस्मादर्धसिद्धस्तान् पिपीपेदित्येके । चतुर्विंशत्यहर्दीक्षित **इत्येके ।** यदि समस्य दीक्षयेयुर्योऽर्चयेयुरीपदीपत्सर्रे पडेव चमसा भरन्ति मातेव कालिका तस्य हितकारिणी सम्पद्यते ॥ ७६ ॥

यथाकथञ्चित्सुरत सम्पाद्य तदासक्त काली ध्यायति मनुमसत्य जप मुक्तकेशो नग्न सोऽचिराद्योगीश्वर सम्पद्यते ॥ ७७ ॥

श्मशान गत्वा ब्रह्मक्षत्रवैश्यशूद्रा यतमे शवे जाज्वल्यमाने तदसभवे तत्र काली मिष्ट्वा बलि छित्त्वा त्रिष्टमसृष् श्मशानस्थेभ्यो भगव महारुद्रपूर्वकेभ्यो भूतप्रेतपिशाचेभ्यो ददामीति दिशि निनयेत् । यदि मनुष्यदिङ्श स्याच्चेदुत्तरस्या तद्यो भूचरस्छिन स्याच्चेदक्षिणस्या तदसृक् नारचरो वा एव पश्चिमस्या खेचरो वा एव पूर्वस्या एव तस्मिञ्जाज्वल्यमाने बलौ तरुणीमारोग्यशालिनामानीय रतिं वाम चाहूय भगम थन कृत्वोत्तारिकाया लिङ्ग धृत्वोत्तरतो घृतमिश्रे दधनि गलित वीर्यमसीति तस्मिन्वीर्यं निक्षिप्यादित्स दृष्ट्वोर्ध्वं ता वस्त्राभधनै सन्तोषयेत्कालीं प्रपद्ये खड्गवरौ प्रपद्ये मुण्डाभयौ प्रपद्ये मुण्डमालाकुण्ड-

रमण्डलानि प्रपद्ये सिंह प्रपद्ये कुरुकुल्ला प्रपद्ये कुरुकुल्लासिंहं प्रपद्ये कालिकेयान्प्रपद्ये, जीवात्मानुग्रहामीश्वरात्मान परात्मानुरक्ता प्रपद्ये, वर्धन श्मशानस्थ प्रपद्ये त्रिशूल च प्रपद्ये कपाल च प्रपद्ये पार्वतीं च प्रपद्ये वृषभ प्रपद्ये पार्वतीवृषभ प्रपद्ये भूतप्रेतपिशाचाश्च प्रपद्ये इति वाचयेत्ततस्ता विसर्जयेदेतेनैव योपामसस्कृता शोधयति तस्मादेष योपाशोधनमन्त्र । **स्वयं चैनं** जपेद्रक्तोऽर्कपुष्पसहस्र वामतो निदध्याद्दक्षिणतो वा अग्नो नग्नोऽलङ्कृतो मुक्तकेशस्तामुद्दिश्य तेन दध्ना समिश्र्याग्नौ जुहोमीत्येतेन सा प्रीणात्वित्युद्देशस्तस्मा॰ अतिपुष्प मन्त्रमुच्चार्य तस्मिन्नग्नौ निक्षिपेत्स खेचर सम्पद्यते ॥ ७८ ॥

गृहे पतितानुत्सार्यान्केशश्मश्रुलोमनखान्यतम च वस्त्रसमार्जन्या गृहीत्वा वा कुशसमार्जन्या वा काशसमार्जन्या पाणिनाच्छाद्यापो योपाशोधन मायावीज च जप्त्वा ताभिरद्भिरभ्युक्षण तस्या इत्येतद्**योपाशोधनं** सर्वत्र । तया सङ्गम्य चमसे सजले शुक्रमुत्सार्य सरजो नीरज **इत्येके** । समार्जनीं च तत्र निधाय चिताग्नौ मध्याह्ने सकृत् कालीवीज समुच्चार्य । कालिकायै सर्वाद्यायै सर्वादृष्टशून्यायै स्वाहेति चमसेन हुत्वा सर्वाचार्य सम्पद्यते ॥ ७९ ॥

वेश्यामूर्ध्वमुखीमुक्तवच्छाययित्वा तया सह सगम्य रेतस्तत्रैव निपात्य भगे तत पतितरेता उत्थायाचान्त स्वरेतसा चित भगमासीन पश्यन् पश्यन् सहस्र मनु जपतीह सोऽदीनोऽन्ते कालीधामगामी सम्पद्यते ॥ ८० ॥

यथाकथचिद्यत्रकुत्रचिन्नक्त सुरतान दनिरत सुरतानन्देषु भक्तेषु आह्लादो यस्यास्ता कालीं ध्यायति य स शिव सम्पद्यते ॥ ८१ ॥

ये दुष्टान्पुरुषान्वध्यान् काल्यग्रे निघ्नन्ति ते प्रतिक्षणमभिलषितसपन्ना सपद्यन्ते ८२

वशी हविष्यान्नषोडशग्रासभुक् लक्षजापी कालीचरणपरायण एव दिवा नक्त यथेच्छ भुक्त्वा शत जप्त्वा य सुरत सम्पादयति सोऽचिन्त्यैश्वर्य सम्पद्यते ॥ ८३ ॥

यो निशीथे सहस्र जपति स युवतिशतवृत सम्पद्यते ॥ ८४ ॥

**एतेनेश्वराणामनुष्ठानानि व्याख्यातानि वामानि** ॥ ८५ ॥

**तानि कालिकेयान्येवेत्येके** ॥ ८६ ॥

पानवर्जं तानि **दक्षिणानि** तस्या **इत्येके** ॥ ८७ ॥

देवताप्रसादकारण किम् ॥ ८८ ॥

तदुद्योग ॥ ८९ ॥

काल **इत्येके** ॥ ९० ॥

प्रदेश **इत्यपरे** ॥ ९१ ॥

तीर्थमि**त्यन्ये** ॥ ९२ ॥

**केऽप्य**परम् ॥ ९३ ॥

अर्चनं केचित् ॥ ९४ ॥

स्वाध्यायं केचित् ॥ ९५ ॥

देवतायाः स्वतन्त्रत्वाद्यमेवैष वृणुते तेन लभ्यः, सर्वे वेदा यत्पदमामनन्तीति शब्दाच्च तदिच्छयेत्येके ॥ ९६ ॥

यथा वा एष जीवः स्वतन्त्रः पापदं पुण्यदं वा कर्मान्यद्वा स्वत एव वृणुते यस्मादेषः स्वतन्त्रः यथा जीवात्मानं ईश्वरः ॥ ९७ ॥

इति पारानन्दसूत्रे उत्तराध्याये द्वितीयमाह्निकम् ॥

**देवताप्रसादलक्षणानि वक्ष्यामः ॥ ९८ ॥**

यथा वै बहवो जीवा एवमीश्वरा बहवो गणनीया जीवाः यदीश्वरा जीवो यदी-क्षितो भवति तदेकमेवेश्वरं स्वीयत्वेन वृणुते तद्दर्शनाय च संयतो भवत्येवं भावनामय्या दीक्षयेश्वरो दीक्षितो भवतीश्वरो यद्दीक्षितो भवति तज्जीवं स्वार्थं दीक्षितमनुष्ठितानुष्ठानं च स्वीयत्वेन वृणुते तस्मिन् प्रसादं च निदधाति जीवो यद्दीक्षितो भवति यदनुष्ठानमनुतिष्ठति च तत्सर्वं विजानातीश्वर ईश्वरस्य सर्वज्ञत्वान्नायमेवमेव जीवः स्वार्थमीश्वरं दीक्षितमपि विजानाति यथा वायं दीक्षितो भवत्येवं स दीक्षितो भक्त्या यं न जानाति स एनं विजानातीति ॥९९॥

तस्मिन्नीश्वरे दीक्षिते सत्येतस्मै एतस्मिञ्जीवे लक्षणान्युद्भवन्ति तैरुद्भूतैरनेन वेदि-तव्यं स मदर्थं दीक्षितोऽभवदिति यान्युद्भवन्ति तान्युदाहरिष्यामः ॥ १०० ॥ १५०० ॥

यां देवतामुपास्ते तस्या देवताया वयःसंवत्सरसंख्यासंख्यातवयोरूपवत्त्वमित्येके **द्वादशाब्दिकवयोरूपवत्त्वं सर्वेषामिति कालभैरवः** षोडशाब्दिकमिति **आकाशभैरवः** कोटिकन्दर्पसौन्दर्योपमेयसुरूपत्वं अद्भुतसुगन्धवत्त्वं अनुद्भूतलोमश्मश्रुवत्त्वं अप्रवृद्धकेशनखवत्त्वं अप्रवृद्धभ्रूयुगपक्ष्मयुगलोमवत्त्वं अकार्यव्यञ्जनवत्त्वं कोटिवायुरूपमेयबलवत्त्वं निरामयत्वं खेदमलोज्झितत्वं अचिन्त्यकर्तृत्वं मनुष्यगन्धर्वैः सेव्यत्वं देवैरित्येके । वर्णश्च श्वेतमिश्रः कृष्णो **वैष्णवानां** श्वेतः **शैवानां** श्वेतमिश्ररक्तः **शाक्तसौर्यगाणपानां** गोक्षीरधाराधवलामिषासृग्वत्त्वमित्येके **नैक** इच्छन्ति । परितो गव्यूतिमात्रे तस्य सर्वप्राणिनां सर्वभाषाविज्ञानं तेषां शब्दो मन्दगम्भीरः सुखश्राव्योऽकठोरः सन्निहितासन्निहितानिसन्निहित-समश्राव्यो भवति । नेच्छन्त्येतदेके । भक्तपरितः क्रोशानां शतमुत्सृष्टवैराः प्राणिनः पर-स्परं भवन्तीत्येके **ब्रह्मवादिन आमनन्ति । परितः क्रोशमात्रमेके** । व्याघ्रा-दयोऽश्वादयः शूराश्च स्वसेष्टेश्वरायुधमेकमर्मामीष्टमेतस्यैतद्दक्षिणां सोऽर्पंत आकाशे प्रतिभास-यन् दिशः प्रतितिष्ठति हेतोर्गृहीतमेव भवत्येतेनोत्सृष्टं पुनस्तद्धस्तेगामित्वं । द्वौ मनुष्यग-न्धर्वौ परिचारकाविकरठवधारी मृगेन्द्रासनधारी तथान्यः । सर्वत्रगमनं अपि पीठतिर्य-ग्धामप्रवेश्यं । परितः पृथ्वी समा निष्कण्टका निर्मला निर्मलजलं तदध. सैकती भूमि-रुत्तरतोऽनुकूलो वातो मन्दः सुगन्धः सुशीतल उत्तरतो जलायनमुद्वाहुपुरुषनिमुद्वाहु-पुरुषद्वयमितं दीर्घं तज्जलं पवित्रं गम्भीर तस्मिन्प्रवाहवत्पश्चादुद्भूतं पुरस्ताच्छान्तं भवत्य-व्याहतेच्छो भवति श्रुतितत्स्मृतीश्च सर्वा वेत्ति सर्वं पदार्थमात्रं सोपक्रमं सपराक्रमं सदयं वेत्ति तस्मात्सर्वज्ञो भवति । सदच्छरतां मूत्रस्य च प्रवृत्तिर्भवति नैनं क्षुधा बाधते न तृषा निद्राऽज्ञानयोश्चान्त्यतो लयः सम्पद्यते । अस्य रेतः प्रजामनुत्पादयति तस्मान्मो-घवीर्यं भवतीत्येके । वादिनां शिष्यतामितिः शत्रूणां दासता तथा स्वादाज्जनानां मद्यानां

